# अनुक्रमणिका.

त्याज्यात्याज्यप्रकरणम् २

## प्रकीर्णप्रकरणम् ३

श्रीः।

सौन्दर्यबोधिन्याख्यव्याख्यासमेता

# मुहूर्तमाला।

## संज्ञाप्रकरणम् १

शिवौ शिवङ्करौ नत्वा जगतः पितरौ परौ।
व्याख्यां मुहूर्तमालायाः कुर्वे सौन्दर्यबोधिनीम्॥ १॥

श्रीमान्रघुनाथदैवज्ञः चिकीर्षितग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं आशीर्वादरूपं मङ्गलं वसन्ततिलकयोपनिबध्नाति—

प्रेङ्खन्नखच्छविमिथश्छुरितेन यस्मि-
न्रक्ताञ्चलग्रथनकौतुकमन्वकारि।
स्वेदोद्गमद्विगुणदानजलः स भूयात्
भूयात्करग्रहविधिः शिवयोः शिवाय॥ १॥

सः शिवयोः करग्रहविधिः शिवाय भूयात्। शिवा च शिवश्च शिवौ "पुमान्स्त्रिया" इत्येकशेषः। तयोः करग्रहो विवाहस्तद्विधिः शिवाय कल्याणाय भूयात् भवतु। युष्माकमिति शेषः। कीदृशो विवाहविधिः। यस्मिन्प्रेङ्खन्नखच्छविमिथश्छुरितेन रक्ताञ्चलग्रथनकौतुकमन्वकारि यस्मिन्विवाहविधौ प्रेङ्खता स्फुरता उभयोर्नखानां छवयो दीप्तयस्तासां मिथश्छुरितेन परस्परमिश्रणेन कर्त्रा रक्तवस्त्राञ्चलग्रथनरूपं कौतुकमन्वकारि अनुकृतम्। विवाहे वधूवरयोर्वस्त्राञ्चलग्रथनं क्रियते आचारात्। वाससी च प्रायश आरक्ते स्तः। नखदीप्तयश्चारक्ताः प्रसृतास्तन्मिथश्छुरणस्य रक्ताञ्चलग्रन्थिकौतुकानुकारित्वं युक्तम्। पुनः कीदृशः। स्वेदोद्गम-

*द्विगुणदानजलः* । स्वेदस्योद्गमेन निःसरणेन *द्विगुणं दानजलं यत्र सः* । *यावती* दानोदकधारा तावती स्वेदधारापि यत्रासीदित्यर्थः । अनेन परस्परसात्विकभावातिशयः सूचितः । अत्राह वात्स्यायनः—"कन्या तु प्रथमसमागमे स्विन्नाङ्गुलिः स्विन्नमुखी भवति । पुरुषस्तु रोमाञ्चितो भवत्येभिरनयोर्भाव परीक्षेत" इति । इदमेभिरिति बहुवचनस्वारस्यात्सात्विकभावमात्रोपलक्षणम् । तेन "रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत्" । इति कुमारसम्भवे व्युत्क्रमवचनं सङ्गच्छते । अतो भूयान् महान् । छुरितेनेति भावे निष्ठा । कर्तरि तृतीया ॥

अथ कविर्व्यवहाराय नामधेयं सूचयंश्चिकीर्षितं गीतीछन्दसा प्रतिजानीते—

**रचयति कृष्णप्रीत्यै रघुनाथः सरसदैववित्तनयः ।**
**गुण्यां मुहूर्तमालामर्थवतीं सूक्तिमौक्तिकैर्वृत्तैः ॥ २ ॥**

सरसदैववित्तनयः सरसनामकज्योतिर्विदः पुत्रः रघुनाथः कृष्णप्रीत्यै श्रीवासुदेवप्रीत्यर्थं गुण्या गुणवतीं अर्थवतीं सदभिधेयविशिष्टां मुहूर्तमालाम् । मुहूर्तशब्देन कालो लक्ष्यते । मुहूर्तानां दिनशुद्धिविशेषाणां मालेव मुहूर्तमाला तां वृत्तैर्गीत्यादिविशिष्टैः सूक्तिमौक्तिकैः सूक्तय एव मौक्तिकानि तैः रचयति । अन्योऽपि वृत्तैर्वर्तुलैर्मुक्ताफलैः सूत्रयुक्तां अर्थो धनं तदस्ति मूल्यत्वेन यस्यास्ता महामूल्यां मालां कृष्णप्रीत्यर्थं रचयति ॥

अथात्र वक्ष्यमाणप्रकरणानि क्रमेणोद्दिशति—

**संज्ञात्याज्यात्याज्यप्रकीर्णसंक्रान्तिगोचराः क्रमशः ।**
**संस्कृतिदोर्ग्रहयात्रा वास्तून्यस्या नव प्रकरणानि ॥ ३ ॥**

संज्ञाप्रकरणं प्रथमे त्याज्यात्याज्यं द्वितीये एवं क्रमशोऽस्या मुहूर्तमालायाः प्रकरणानि नव । वक्ष्यन्त इति शेषः । तत्र दोर्ग्रहो विवाहः । प्रथमप्रकरणे प्रसङ्गात्परिभाषादेर्निरूपितत्वेपि संज्ञानां प्रायशः कथना-

त्संज्ञेत्यभिधीयते । "वास्तुरस्त्रियाम्" इत्यमरः । अनेनास्य प्रकरणगत-मुहूर्तसमुदायाः प्रतिपाद्यत्वेन विषया इत्युक्तम् । संबन्धस्त्वार्षवचनमूलकत्वेन ब्रह्मवसिष्ठादिपरम्परया एव । मुहूर्तानां ग्रन्थस्य च प्रतिपाद्यप्रतिपादकभावोऽर्थसिद्धः ॥

अथ शीघ्रोपस्थितये चिकीर्षितां रीतिमुपजातिकया प्रतिजानीते—

**उत्सर्गतोऽत्र प्रथमं प्रयुज्य क्रमेण वक्तव्यपदार्थनाम ।**
**एकैकयोक्त्या स्फुटमेकमेकं वक्ष्ये यथा शीघ्रमुपस्थितिः स्यात् ४**

अत्र ग्रन्थे उत्सर्गतः प्रायशः क्रमेण वक्तव्यपदार्थानां तिथीशनक्षत्रेश्वरादीनां अभिधानं 'तिथीश्वराः' 'भेशाः' इत्यादिरीत्या प्रथमं पूर्वं प्रयुज्य प्रतिज्ञाय पश्चादेकैकयोक्त्या तिथिनक्षत्रादेरसङ्कीर्णयोक्त्या स्फुटं यथा स्यात्तथा एकमेकं मुहूर्तविशेषं वक्ष्ये । तथा चात्र वस्त्रादिधारणाभिधानं 'वस्त्रभूषणविधिः' इति प्रथमं प्रयुज्य पश्चात् 'ध्रुवाश्विनी' इत्यादिना मुहूर्तः कथ्यते । तत्प्रयोजनमाह—यथा शीघ्रमुपस्थितिः स्यात् । येन प्रकारेण मुहूर्तपदस्य झटिति प्राप्तिः स्यात् । यथा—केनचिद्वस्त्रधारणमुहूर्ते पृष्टे 'वस्त्रभूषणविधिः' इति वस्त्रशब्दस्य प्रथमप्रयोगात्तत्पाठः शीघ्रमुपतिष्ठेतेति । उत्सर्गस्य अपवादमात्रमव्याप्यमिति प्रायिकत्वं स्फुटम् । तेन शिल्पक्रियामुहूर्तकथनादौ तादृशप्रथमप्रयोगाभावेऽपि न प्रतिज्ञाभङ्गः । एवमस्यावान्तरप्रयोजनान्युक्तानि । महाप्रयोजनं तु शुभाशुभनिरूपणम् । यदाह नारदः—"प्रयोजनं तु जगतः शुभाशुभनिरूपणम्" इति । प्रयोजनप्रसङ्गादत्र बहु वक्तव्यमपि विस्तरभिया नोच्यते । तज्जिज्ञासुभिर्मुहूर्तदीपिकायामुपक्रम एव द्रष्टव्यम् ॥

**ह्रस्वोऽपि वर्णो भवतीह दीर्घः शेषं विधिं वक्ति च पर्युदासः ।**
**नामैकदेशात्तदशेषमूह्यं ज्ञेयः क्वचिच्छिद्नविपर्ययोऽपि ॥ ५ ॥**

इह क्वचिद्ध्रस्वोऽपि वर्णो दीर्घो भवति । यथा—'घाततिथ्यो नृपू-

कृाया एकदेशस्य ह्रस्वस्य स्थाने रीति दीर्घः प्रयुक्तः । तथा पर्युदासो निषेधः अर्थाच्छेषं विधिं वक्ति । यथा—अर्कभौमशनैश्चरनिषेधोऽवशिष्टान् चन्द्रबुधगुरुशुक्रान्विदधाति । तथा नामैकदेशे नामग्रहणमिति न्यायमनुसृत्य नामैकदेशः कृतः तस्मादशेषं नामोह्यं तर्क्यम् । यथा—'ज्येष्ठानुपुष्यश्रवसां' इत्यत्र अन्विति नामैकदेशादनुराधोह्या । 'धाततिथ्यो नपूभभा' इत्यादौ नन्दाद्या ऊह्याः । क्वचिल्लिङ्गविपर्ययोऽपि कृतः । यथा—'मैत्रं मृदुम्' इति मृदुशब्दस्य पुंस्त्वं तथा तुलायाः स्त्रीत्वे प्रसिद्धे तुलमिति क्लीबप्रयोगः । एतच्च प्राचां प्रयोगानुसारेण प्रयुक्तमिति द्रष्टव्यम् ॥

**मैत्रं मृदुं मित्रमिहानुराधामाह श्रविष्ठामुडु वासवं च ।**
**भमृक्षमेतद्द्वितयं च तारां राशिं क्वचित्कोणमपि त्रिकोणम् ६**

इहास्मिन्ग्रन्थे मैत्रमिति संज्ञा मृदुं मृदुनक्षत्राण्याह । न तु केवलानुराधाम् । एवं मित्रमित्यनुराधामाह । वासवमुडु नक्षत्रं श्रविष्ठां धनिष्ठामाह । भमृक्षमिति संज्ञाद्वयं क्वचित्तारामाह क्वचिद्राशिम् । त्रिकोणमुदयराशेः सकाशान्नवपञ्चमस्थानम् ॥

**भूतं चतुर्दशी विष्टिभद्रे क्षणमुहूर्तकौ ।**
**द्वीशराधे व्यतीपातपातौ माताऽदिती समे ॥ ७ ॥**

भूतमिति चतुर्दश्याः संज्ञा । विष्टिभद्रेति द्वे सप्तमकरणस्य । द्वीशं राधेति द्वयं विशाखानक्षत्रस्य । माताऽदितिरिति द्वे पुनर्वसुनक्षत्रस्य ॥

अथ गुणनहारफलयोर्लक्षणमुपगीत्याह—

**गुणकाङ्केन समाना गुण्यावृत्तिर्भवेद्गुणनम् ।**
**यद्गुणहारः शुद्ध्यति भाज्याद्भागहारफलम् ॥ ८ ॥**

येनाङ्केन गुण्यते स गुणकोऽङ्कः यो गुण्यते स गुण्यः । गुणकस्याङ्केन चिह्नेन समाना तुल्या गुण्यस्यावृत्तिः गुणनं भवेत् । यथा—गुणकः २९ गुण्यः ९ अत्र गुणकसङ्ख्या पञ्चविंशतिरतः पञ्चविंशति.

वारं गुण्यायाः पञ्चसङ्ख्याया आवर्त्तने १२५ सपादशतं भवतीदं गुणनम्। यद्वा गुणकस्याङ्केन चिह्नेन समाना तुल्या गुण्यस्यावृत्तिः गुणनं भवेत्। यथा—गुणकः २५ गुण्यः ५ अत्र गुणकस्य द्वे चिह्ने तत्रैकं दशकद्वयस्यापरं पञ्चानाम्। अतो दशकद्वयेन पञ्चभिश्च गुण्ये ५ गुणिते १२५ आवृत्तिद्वयं भवति। इदं गुणनमुच्यते। यस्य गुणहारो भाज्याच्छुद्ध्यति तद्भागहारफलम्। यथा भाजकेन ८ भाज्ये ४० भाजितेऽस्य ५ गुणहारो ४० भाज्याच्छुद्धः अत इदं ५ भागहारफलम्॥

**शून्येन गुणितं शून्यं भक्तं नाप्यं यथास्थितम्।**
**भागावशेषितं तष्टमङ्कानां वामतो गतिः॥ ९॥**

शून्येन गुणितोऽङ्कः शून्यमेव भवति। शून्येन भक्तमाप्यं न भवति। किन्तु यथास्थितमेव। भागावशेषितं तष्टसंज्ञकम्। यथा—भाज्ये १०० भाजकेन ७ भक्तेऽवशेषितं २ तष्टम्। अङ्कानां गतिर्न्यासः वामतः स्वदक्षिणमारभ्य वामावसाना ज्ञेया॥

अथ सङ्ख्याङ्कसंज्ञा आहाष्टभिः—

**एकं भूमीन्दुरूपं द्वावश्विपक्षासिदोर्यमाः।**
**त्रयः क्रमग्रामरामपुरलोकगुणाग्नयः॥ १०॥**
**चत्वारोऽब्धिश्रुतियुगकृताः पञ्चेषुवायवः।**
**भूताक्षाः षड्रसाङ्गर्तुतर्काः सप्त स्वरर्षयः॥ ११॥**
**तुरङ्गपर्वतौ चाष्टौ वसुसर्पमतङ्गजाः।**
**नवसङ्ख्या नन्दरन्ध्रनिधिगोऽङ्कनभश्चराः॥ १२॥**
**दशाशाः शून्यमभ्रं स्यादेकादश महेश्वराः।**
**द्वादशार्कास्तथा विश्वे त्रयोदश चतुर्दश॥ १३॥**
**मन्विन्द्रभुवनं पञ्चदश तिथ्योऽथ षोडश।**
**कलाष्टिराजोऽथात्यष्टिर्घनाः सप्ताधिका दश॥ १४॥**
**धृतयोऽष्टादश प्रोक्ता अतिधृत्यूनविंशतिः।**
**स्युर्विंशतिः कृतिनखाङ्गुल्यश्चैकविंशतिः॥ १५॥**

फाया एकदेशस्य ह्रस्वस्य स्थाने रीति दीर्घः प्रयुक्तः। तथा पर्युदासो निषेधः अर्थाच्छेषं विधिं वक्ति । यथा—अर्कभौमशनैश्चरनिषेधोऽवशिष्टान् चन्द्रबुधगुरुशुक्रान्विदधाति । तथा नामैकदेशे नामग्रहणमिति न्यायमनुसृत्य नामैकदेशः कृतः तस्मादशेषं नामोह्यं तर्क्यम् । यथा—'ज्येष्ठानुपुष्यश्रवसां' इत्यत्र अन्विति नामैकदेशादनुराधोह्या । 'घाततिथ्यो नपूभाभा' इत्यादौ नन्दाद्या ऊह्याः । क्वचिल्लिङ्गविपर्ययोऽपि कृतः। यथा—'मैत्रं मृदुम्' इति मृदुशब्दस्य पुंस्त्वं तथा तुलायाः स्त्रीत्वे प्रसिद्धे तुलमिति क्लीबप्रयोगः। एतच्च प्राचां प्रयोगानुसारेण प्रयुक्तमिति द्रष्टव्यम् ॥

मैत्रं मृदुं मित्रमिहानुराधामाह श्रविष्ठामुडु वासवं च ।
भमृक्षमेतद्द्वितयं च तारां राशिं क्वचित्कोणमपि त्रिकोणम् ६

इहास्मिन्ग्रन्थे मैत्रमिति संज्ञा मृदुं मृदुनक्षत्राण्याह । न [illegible] केवलानुराधाम् । एवं मित्रमित्यनुराधामाह । वासवमुडु नक्षत्रं श्रविष्ठां धनिष्ठामाह । भमृक्षमिति संज्ञाद्वयं क्वचित्तारामाह क्वचिद्राशिम् । त्रिकोणमुदयराशेः सकाशान्नवपञ्चमस्थानम् ॥

भूतं चतुर्दशी विष्टिभद्रे क्षणमुहूर्तकौ ।
द्वीशराधे व्यतीपातपातौ मात्रदिती समे ॥ ७ ॥

भूतमिति चतुर्दश्याः संज्ञा । विष्टिभद्रेति द्वे सप्तमकरणस्य । द्वीशं राधेति द्वयं विशाखानक्षत्रस्य । माताऽदितिरिति द्वे पुनर्वसुनक्षत्रस्य ॥

अथ गुणनहारफलयोर्लक्षणमुपगीत्याह—

गुणकाङ्केन समाना गुण्यावृत्तिर्भवेद्गुणनम् ।
यद्गुणहारः शुद्ध्यति भाज्याच्चद्भागहारफलम् ॥ ८ ॥

येनाङ्केन गुण्यते स गुणकोऽङ्कः यो गुण्यते स गुण्यः । गुणकस्याङ्केन चिह्नेन समाना तुल्या गुण्यस्यावृत्तिः गुणनं भवेत् । यथा—गुणकः २९ गुण्यः ९ अत्र गुणकसङ्ख्या पञ्चविंशतिरतः पञ्चविंशति-

वारं गुण्यायाः पञ्चसङ्ख्याया आवर्तने १२५ सपादशतं भवतीदं गुणनम्। यद्वा गुणकस्याङ्केन चिह्नेन समाना तुल्या गुण्यस्यावृत्तिः गुणनं भवेत्। यथा—गुणकः २५ गुण्यः ५ अत्र गुणकस्य द्वे चिह्ने तत्रैकं दशकद्वयस्यापरं पञ्चानाम्। अतो दशकद्वयेन पञ्चभिश्च गुण्ये ५ गुणिते १२५ आवृत्तिद्वयं भवति। इदं गुणनमुच्यते। यस्य गुणहारो भाज्याच्छुद्ध्यति तद्भागहारफलम्। यथा भाजकेन ८ भाज्ये ४० भाजितेऽस्य ५ गुणहारो ४० भाज्याच्छुद्धः अत इद ५ भागहारफलम्॥

शून्येन गुणितं शून्यं भक्तं नाप्यं यथास्थितम्।
भागावशेषितं तष्टमङ्कानां वामतो गतिः॥ ९॥

शून्येन गुणितोऽङ्कः शून्यमेव भवति। शून्येन भक्तमाप्यं न भवति। किन्तु यथास्थितमेव। भागावशेषितं तष्टसंज्ञकम्। यथा—भाज्ये १०० भाजकेन ७ भक्तेऽवशेषितं २ तष्टम्। अङ्कानां गतिर्न्यासः वामतः स्वदक्षिणमारभ्य वामावसाना ज्ञेया॥

अथ सङ्ख्याङ्कसंज्ञा आह्वाष्टभिः—

एकं भूमीन्दुरूपं द्वावश्विपक्षाक्षिदोर्यमाः।
त्रयः क्रमग्रामरामपुरलोकगुणाग्नयः॥ १०॥
चत्वारोऽब्धिश्रुतियुगकृताः पञ्चेषुवायवः।
भूताक्षाः षड्रसाङ्गर्तुतर्काः सप्त स्वरर्षयः॥ ११॥
तुरङ्गपर्वतौ चाष्टौ वसुसर्पमतङ्गजाः।
नवसङ्ख्या नन्दरन्ध्रनिधिगोङ्कनभश्चराः॥ १२॥
दशाशाः शून्यमभ्रं स्यादेकादश महेश्वराः।
द्वादशार्कास्तथा विश्वे त्रयोदश चतुर्दश॥ १३॥
मन्विन्द्रभुवनं पञ्चदश तिथ्योऽथ षोडश।
कलाष्टिराजोऽथात्यष्टिर्घनाः सप्ताधिका दश॥ १४
धृतयोऽष्टादश प्रोक्ता अतिधृत्यूनविंशतिः।
स्युर्विंशतिः कृतिनखाङ्गुलयश्चैकविंशतिः॥ १५॥

हित तत्खलु दक्षिणे च" इति । अत्र ऋतवोऽप्यभिधेयाः । ते न मासद्वयात्मकाः मीनादिक्रमेण सौराश्चैत्रादिक्रमेण चान्द्रास्तत्संज्ञाः क्रमेण यथा—वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः शिशिर इति ॥

अथ मासभेदानाह द्वाभ्याम्—

**नाक्षत्रः सावनश्चान्द्रः सौरो मासश्चतुर्विधः ।**
**नाक्षत्रो भभ्रमादिन्दोस्त्रिंशद्वारस्तु सावनः ॥ २७ ॥**

नाक्षत्रादिभेदेन मासश्चतुर्विधः । तत्र नाक्षत्र इन्दोर्भ्रमात् । चन्द्रस्य सर्वनक्षत्रभोगेनेत्यर्थः । सावनस्तु त्रिंशद्दिनात्मकः ॥

**चान्द्रो दर्शावधिर्मासः सौरः स्यात्सङ्क्रमाद्रवेः ।**
**चैत्रादिसंज्ञाश्चान्द्राणां सौराणां च झषार्कतः ॥ २८ ॥**

चान्द्रो मासो दर्शावधिरमान्तः । शुक्लकृष्णपक्षात्मक इत्यर्थः । रवेः सङ्क्रमात्सौरः । अर्कसङ्क्रान्तिमारभ्य सङ्क्रान्त्यवधिरित्यर्थः । तत्र संवत्सरप्रतिपदमारभ्य चान्द्राणां चैत्रादिसंज्ञाः प्रसिद्धाः । सौराणां च झषार्कतो मीनादिसङ्क्रमाच्चैत्रादिसंज्ञाः स्युरित्यर्थः । एषां व्यवस्थामाह गर्गः— "सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥" इति । विष्णुधर्मे—"नक्षत्रसत्राण्ययनानि चेन्दोर्मासेन कुर्याद्भगणात्मकेन" ॥

अथ चैत्रादीनां क्रमेण संज्ञा आह—

**मधुमाधवशुक्रशुचिनभोनभस्येषसंज्ञकोर्जाश्च ।**
**क्रमतः सहाः सहस्यस्तपास्तपस्यश्च चैत्रतः संज्ञाः ॥२९॥**

चैत्रस्य मधुरिति वैशाखस्य माधव इति इष इत्याश्विनस्य ऊर्ज इति कार्तिकस्य संज्ञा ॥

**तिथिवासरनक्षत्रयोगानां करणस्य च ।**
**शुद्धिः पञ्चाङ्गशुद्धिस्तां सर्वत्रादौ विचिन्तयेत् ॥ ३० ॥**

सर्वत्र सर्वस्मिन्कर्मणि ॥

तिथीशानाह—

**तिथीश्वरा वह्निविरिञ्चिपार्वती-**
**गणेश्वराशीविषतारकद्विषः ।**
**रवीशदुर्गान्तकविश्वकेशव-**
**प्रसूनधन्वेशनिशाकराः क्रमात् ॥ ३१ ॥**

एते क्रमात्तिथीनामीश्वराः । आशीविषः सर्पः । प्रसूनधन्वा मदनः । तारकद्विट् स्कन्दः । ईशः शिवः । एतत्प्रयोजनं तु तत्तत्तिथौ तत्तद्देवताप्रतिष्ठादिकं देवतासंज्ञया तिथिसंज्ञाज्ञानं च ॥

**या तिथिः स्पृशति वासरत्रयं गर्हिता भवति वृद्धिरित्यपि ।**
**या च न स्पृशति भास्करोदयं साऽवमेत्यखिलकर्मगर्हिता ३२**

या तिथिर्दिनत्रय स्पृशति सा वृद्धिसंज्ञिकापि गर्हिता । या च सूर्योदयं न स्पृशति सा अवमा क्षयसंज्ञिका सर्वकर्मसु निन्दिता ॥

नक्षत्रेशानाह गीत्यार्याभ्याम्—

**भेशा दस्रयमाग्निप्रजेन्द्वीशादितीज्यकद्रुजाः ।**
**पितरो भगार्यमार्कत्वष्टृसमीरा वृषानलौ मित्रः ॥ ३३ ॥**
**इन्द्रो निर्ऋतिर्नीरं विश्वेविधिहरिवसूदकाध्यक्षाः ।**
**अजचरणोऽहिर्बुध्न्यः पूषाष्टाविंशतिश्चैते ॥ ३४ ॥**

भेशा इति । दस्रादयोऽष्टाविंशतिर्भेशा नक्षत्राणामधिपतयः । दस्रावश्विनौ । इन्दुश्चन्द्रः । ईज्यो गुरुः । कद्रुजाः सर्पाः । वृषानलौ इन्द्राग्नी विशाखाधिपौ । विधिरभिजितोऽधिपः । उदकाध्यक्षो वरुणः ॥

अभिजिन्मानमाह—

**वैश्वान्त्यपादश्रुत्याद्यतिथ्यंशश्चाभिजिद्भवेत् ।**
**यत्राष्टाविंशतिर्भानां गण्योऽयं तत्र नान्यथा ॥ ३५ ॥**

वैश्वमुत्तराषाढा तस्यान्त्यपादश्चतुर्थोङ्घ्रिः । श्रुतिः श्रवणस्तस्याद्यतिथ्यंशः प्रथमपञ्चदशांशो मिलित्वाऽभिजिद्भागो भवेत् । यत्र वेधादौ नक्षत्राणामष्टाविंशतिरपेक्षिता तत्रैवायमभिजिद्गण्यो न सर्वत्र ॥

अथ साभिजिन्नक्षत्रतारासङ्ख्यां सप्रयोजनमाह द्वाभ्याम्—

**नक्षत्रतारास्त्रिहयङ्गेष्वग्निभूवेदवह्निभिः ।**
**शरेषुद्व्यक्षिपक्षेन्दुभूकृताब्ध्यग्निशूलिभिः ॥ ३६ ॥**
**नेत्रद्विभिस्त्र्यब्धिशतद्विद्विदन्तैर्मिताः क्रमात् ।**
**तारासङ्ख्यामितैर्वर्षैर्विवाहे सदसत्फलम् ॥ ३७ ॥**

नक्षत्रेति । अश्विन्यादीनां क्रमेण तारासङ्ख्या ३ । ३ । ६ । ५ । ३ । १ । ४ । ३ । ५ । ५ । २ । २ । ५ । १ । १ । ४ । ४ । ३ । ११ । २ । २ । अ०३ । ३ । ४ । १०० । २ । २ । ३२ विवाहे नक्षत्रसूचितं सदसत्फलं तत्तारासङ्ख्यामितैर्वर्षैर्ज्ञेयम् ॥

अथ नक्षत्राणामाकृतीराह द्वाभ्याम्—

**नक्षत्राणां रूपं हयमुखयोनिक्षुरानएणास्यम् ।**
**मणिगृहबाणसुदर्शनशालाशय्याश्च मञ्चकरमुक्ताः ॥ ३८ ॥**
**विद्रुमतोरणवलिनिभकुण्डलवर्हिसहपुच्छगजदन्ताः ।**
**शय्यात्रिकत्रिविक्रममर्दलवृत्तानि मञ्चयममुरजाः ॥ ३९ ॥**

अश्विन्या रूपं हयमुखमश्वमुखसदृशम् । भरण्या योनिर्भगसदृशम् । एवं क्रमेणाष्टाविंशतेरपि । तत्रानः शकटम् । एणास्यं मृगमुखम् । सुदर्शनश्चक्रम् । करो हस्तः । बलिनिभं भक्तपिण्डसदृशम् । त्रिकस्त्रिकोणः । त्रिविक्रमस्त्रिचरणाभम् । यमी यमलाभम् । मुरजो मृदङ्ग ॥

अथ रात्रौ कालमानज्ञानार्थं योगताराामाह—

**ब्राह्मयार्द्रमूलादितिभस्य पूर्वे**
**याम्यान्त्यपित्र्यानलभस्य याम्ये ।**
**हस्तश्रविष्ठाख्यभयोश्च पश्चा-**
**द्धस्तस्य तत्रोत्तरगा च किञ्चित् ॥ ४० ॥**
**पूर्वोत्तराश्वीन्दुविशाखिकानां**
**स्फुटोत्तरस्यां दिशि योगतारा ।**
**ज्येष्ठानुपुष्यश्रवसां तु मध्ये**
**स्थूलाथ शेषा मर्कटकैर्कैत्र ॥ ४१ ॥**

*ब्राह्म्याहीति । ब्राह्मं रोहिणी । अहिराश्लेषा । अदितिभं पुनर्वसुः ।* मूलं स्पष्टम् । एतेषां पूर्वभागे या स्फुटा सा योगतारोच्यते । याम्यं भरणी । अन्त्यं रेवती । पित्र्यं मघा । अनलभं कृत्तिका । एतेषां याम्ये दक्षिणभागे । श्रविष्ठा धनिष्ठा । पश्चात्पश्चिमे । तत्रापि हस्तस्य योगतारा ईषदुत्तरस्याम् । पूर्वात्रयमुत्तरात्रयमश्विनीमृगशिरो विशाखा चेत्येतेषामुत्तरस्याम् । अनु अनुराधा । श्रवः श्रवणः । मध्ये मध्यभागे या स्थूला सा योगतारा । शेषा एकैका प्रकटैव ॥

**परीक्ष्य नक्षत्रमिति क्षपायां**
**निरीक्ष्यतेऽस्तेऽभ्युदये खमध्ये ।**
**ऋक्षेण कालः किल तेन लक्ष्य-**
**स्तीक्ष्णांशुशङ्कुप्रभया तथाहि ॥ ४२ ॥**

*इत्येवप्रकारेण क्षपायां रात्रौ नक्षत्रं परीक्ष्य अस्ते अभ्युदये गगनमध्ये वा यन्नक्षत्रं निरीक्ष्यते तेन ऋक्षेण कालो लक्ष्यः । तथाऽहि दिवा तीक्ष्णांशोः सूर्यस्य शङ्कुना परीक्षिता या प्रभा छाया तया कालो लक्ष्यः ॥*

तत्रादौ क्षपाया कालपरीक्षामाह—

**सूर्यर्क्षतोऽस्तर्क्षमथोदयर्क्षं खमध्यगर्क्षं गणयेत्क्रमेण ।**
**हीनं कुतिथ्यष्टभिरष्टभक्तं कृत्वा हतं स्युर्निशि भुक्तनाड्यः ४३**

सूर्येति । निशि रात्रौ सूर्यर्क्षतः सूर्याधिष्ठितनक्षत्रादस्तनक्षत्रं उदयनक्षत्रं वा खमध्यगतनक्षत्रं वा गणयेत् । ततः क्रमेण कुतिथ्यष्टभिर्हीनम् । अस्तर्क्षे एकः उदयर्क्षे पञ्चदश खमध्यगर्क्षेऽष्टौ ऊनाः कार्या इत्यर्थः । तत एतदन्यतमं कृत्वा विंशत्या गुणितमङ्कैर्नवभिर्भक्तं लब्धं भुक्तघटिका भवेयुः । यथा—सूर्यर्क्षमश्विनी ततोऽस्तर्क्षं मृगशिरो गणितम् ५ एकहीनम् ४ विंशत्या हतम् ८० अङ्कैर्भक्तम् ८ । ९२ एता भुक्तनाड्यः ॥

अथ रात्रौ भोग्यघटीज्ञानमाह—

**रविभं खदलोदयास्तभात्क्रमशो नागतिथिक्षमोनितम् ।**
**नखनिघ्नमथाङ्कभाजितं निशि भोग्या घटिकाः श्रमं विना ४४**

रविभमिति । खमध्यनक्षत्रादुदयभाद्वा सूर्यर्क्षं गणयेत् । क्रमेण नागैः ८ तिथिभिः १५ क्षमया १ ऊनितं कृत्वा नखैः २० हत्वा नवभिर्भजेत् । लब्धं निशि भोग्या घट्य इत्यर्थः । अत्रोदयास्तभान्निष्पन्ना घटिका दिनमानरहिताः कार्या अगतिकत्वात् । अथ वा 'क्रमशो नागधरातिथिर्विना' इति पाठः सुगमः ॥

अथ प्रकारान्तरेण रात्रिमानज्ञानार्थं तावन्नक्षत्रभोगानाह—

**दास्रादिभोगघटिकाः साङ्घ्रिरूपं द्वयं त्रयम् ।**
**द्वयं साङ्घ्रिद्वयं द्वे च त्रयं सार्धद्वयं दलम् ॥ ४५ ॥**
**साङ्घ्रित्रयं सार्धयुग्मं द्वयं सार्धद्वयं तथा ।**
**सार्धैकं त्रितयं साङ्घ्रिद्वयं द्वयमथैककम् ॥ ४६ ॥**
**द्वयं द्वयं चैकमेकं सपादद्वितयं तथा ।**
**सार्धैकं पञ्चकं चैकं द्वयं व्यङ्घ्र्यब्धयः क्रमात् ॥ ४७ ॥**

दास्रादीति । अश्विन्यादिभोगघटिकाः क्रमेण यथा—अ० १ । १५ भ० २ कृ० ३ रो० २ मृ० २।१५ आ० २ पुन० ३ पुष्य० २।३० आ० ०।३० म० ३।१५ पू० २।३० उ० २ ह० २।३० चि० १।३० स्वा० ३ वि० २।१५ अ० २ ज्ये० १ मू० २ पू० पा० २ उ० पा० १ अभि० १ श्र० २।१५ धनि० १।३० श० ५ पू० भा० १ उ० भा० २ रे० ३।४५ एवं षष्टिः ॥

**सूर्यर्क्षतो गगनमध्यगयोगतारा-**
**पर्यन्तमृक्षनिचयो वसुभिर्वियुक्तः ।**
**शेषर्क्षभोगघटिकायुतिरत्र रात्रे-**
**र्भुक्ता भवन्ति विपरीतविधेस्तु भोग्याः ॥ ४८**

सूर्यनक्षत्राद्गगनमध्यस्थयोगतारापर्यन्तं नक्षत्रसमुदायोऽष्टभिर्हीनः कार्यः। शेषनक्षत्राणां भोगघटिकायोगो रात्रेर्भुक्ता घट्यो भवन्ति। यथा—सूर्यनक्षत्रादश्विन्याः गगनमध्यगयोगतारा उत्तराफल्गुनी तत्पर्यन्तमृक्षनिचयो १२ वसुभिर्वियुक्तः ४ शेषर्क्षाणामश्विन्यादीनां भोगघटिकायुतिः ८। १९ एता रात्रेर्भुक्ता घटिका भवन्ति ८ ॥ अथ भोग्यघटीराह—विपरीतविधेस्तु भोग्या इति। विपरीतविधेर्गगनमध्यगयोगताराामारभ्य सूर्यनक्षत्रपर्यन्तगणनाद्भोग्या घट्यो भवन्ति। यथा—मध्ययोगतारा उत्तराफल्गुनी तामारभ्य सूर्यभमश्विनी तत्पर्यन्तमृक्षनिचयः १८ अयं वसुभिर्वियुक्तः शेषर्क्षाणां पूर्वाषाढाद्यश्विन्यन्तानां भोगघटीयुतिः २०। ४९ एतदपेक्षया सूक्ष्मघटीज्ञानं तु शेषर्क्षाणि चतुर्दशभ्यः संशोध्यावशिष्टनक्षत्रभोगघटिकायोगो भोग्यघटिका भवन्ति। यथा—पूर्वोक्तशेषर्क्षाणि ४ एतद्रहिताश्चतुर्दश १० अवशिष्टानां मृगशीर्षादि दश नक्षत्राणां भोगयोगः २२ एता भोग्याः ॥

अथ दिवा शङ्कुच्छायया कालज्ञानं वक्ष्यंस्तावच्छङ्कुलक्षणमाह—

**सूचीमुखो द्वादशभिर्मितोऽङ्गुलै-**
**रधः पृथुस्तिष्ठति यो महीतले।**
**विना निखातं गजदन्तनिर्मितः**
**कीलः स शङ्कुर्नर इत्युदीरितः ॥ ४९ ॥**

सूचीवन्मुखं यस्य सः द्वादशभिरङ्गुलैः परिमितः निखातं विना यथा महीतले तिष्ठति तथाऽधः पृथुः एवंभूतो यः कीलः स शङ्कुर्नर इति च कथितः ॥

**स्वाष्टांशहीनं परमेष्टवासरा-**
**न्तरं तदष्टांशविहीनभूभुजा।**
**नृभार्कभागेन दिनार्धतः क्रमा-**
**ल्लब्धा गतैष्या घटिका दिनार्धयोः ॥ ५० ॥**

दिवा कालज्ञानं यस्मिन्समयेऽपेक्षितं तस्मिन्नेव समये पूर्वोक्तशङ्को-

श्छाया यावदङ्गुलमिता स्यात्सा ज्ञातव्या। तत इदमनुष्ठेयम्। परमेष्टवासरान्तरम्। यस्मिन्दिने दिनमानवृद्धेरतिशयस्तत्परमवासरम्। यस्मिन्दिने कालः परीक्ष्यते तदिष्टवासरम्। अनयोरन्तरं विवरं स्वाष्टयंशहीनं स्वषोडशांशेन रहितं कार्यम्। तदष्टांशविहीनभूयुता तस्य विवरस्याष्टमांशेन विहीना भूरेका घटी तद्युतेन नृमार्कभागेन नृमायाः शङ्कुच्छायाया अर्कभागेन द्वादशांशेन घटिकात्मकेन इष्टदिनार्धतो लब्धा घट्यः क्रमेण दिनार्धयोर्भुक्ता भोग्याश्च स्युः। पूर्वकपाले भुक्ता उत्तरकपाले भोग्या इत्यर्थः। अस्योदाहरणम्—इष्टसमये शङ्कुच्छाया(८)ङ्गुलानि १९ इष्टदेशे परमवासरमानम् ३२। १८ इष्टवासरमानम् २८। १४ अनयोरन्तरम् ४। ४ इदं स्वाष्टयंशेन ०। ३९ हीनम् ३। ४९ एतदष्टांशेन ०। २८ विहीना भूः ०। ३२ अनया नृमार्कभागो १। १९ युक्तः १। ४७ अनेन दिनार्धतो १४। ७ लब्धा घटिकाः ७। ५९ एता मध्याह्नात्पूर्वं भुक्ताः पश्चाद्भोग्याः। परमवासरमानं तु चरखण्डस्य योगेन द्विगुणेन पलात्मकेन युक्तास्त्रिंशद्घट्यः परमवासरम्। यथा—चरखण्डानि ३२। २६। ११ एषां योगः ६९ द्विगुणः १३८ एभिः पलैर्युक्ता त्रिंशत् ३२। १८ इष्टदिनमानसाधनं तु वक्ष्यति॥

अथ प्रकारान्तरेण दिवा कालमानमाह सार्धेन—

> नात्युच्चखर्ववपुषः पुरुषस्य भानो-
> श्छाया पदैः परिमिता सहिता च पङ्क्तिः।
> तद्द्युसमध्यजभयोर्विवरेण भक्त-
> स्त्रिघ्नः परद्युमिति मध्यभयोर्वियोगः॥ ५१॥
> याताः स्युरह्नि घटिका दिनमध्यतोऽर्वाक्
> शेषास्तदूर्ध्वमिति वा सुगमप्रकारः।

नात्युच्चं नातिखर्वं वपुर्यस्य तस्य पुरुषस्य पादैः परिमिता गणिता भानोश्छाया पङ्क्तिः सहिता कार्या। तस्या वक्ष्यमाणद्युसमध्यजभायाश्च विवरं कर्तव्यम्। तेन भक्तः परमद्युमानमध्यभयोर्वियोगस्त्रिघ्नः कर्तव्यः।

ता घटिका दिनमध्यतो मध्याह्नादर्वाक् अह्नि दिवसे याताः मध्याह्ना-दूर्ध्वं विशेषा भोग्याः स्युः । इति वा कालमानस्य सुगमप्रकारः । यथा—पुरुषपदच्छाया १० पङ्क्तिः सहिता १६ अस्या घस्रमध्यजभा-याश्च ३।२४ विवरेण घटिकात्मकेन १२।३६ परमद्युमितिः ३२। १८ गम्यभा ३।२४ अनयोर्वियोगः २८।५४ भक्तः २।१७ त्रिघ्नः ६।५१ एता घट्यो दिनार्धात्पूर्वं याताः पश्चाद्भोग्याः ॥

अथ दिनमध्यभाज्ञानमाह वृत्तार्धेन—

**स्वीयाङ्कभागरहितं परमद्युमान-**
**स्वेष्टद्युमानविवरं दिनमध्यभा स्यात् ॥ ९२ ॥**

परमद्युमानं स्वेष्टद्युमानं च प्राग्व्याख्यातम् । तयोर्विवरमन्तरं स्वीया-ङ्कभागरहितं स्वषडंशेन हीनं दीनमध्यभा स्यात् । यथा—परमद्युमानम् ३२।१८ स्वेष्टद्युमानम् २८।१४ तयोर्विवरम् ४।४ स्वीयाङ्कभागेन ०।४० रहितम् ३।२४ इयं दिनमध्यभा ॥

अथ नामनक्षत्रज्ञानार्थं शतपदचक्रोक्तनक्षत्रचरणसंज्ञा आह सप्तभिः—

**चुचेचोलाश्विनी प्रोक्ता लिलुलेलो भरण्यथ ।**
**अइउए कृत्तिका स्यादोववीवु तु रोहिणी ॥ ९३ ॥**
**वेवोककि मृगशिरः कुघङछ तथार्द्रिका ।**
**केकोहहि पुनर्वसू हुहेहोड तु पुष्यभम् ॥ ९४ ॥**
**डिडुडेडो तयाऽऽश्लेषा ममिमुमे मघा स्मृता ।**
**मोटटिटु पूर्वफल्गु टेटोपप्युत्तराफभम् ॥ ९५ ॥**
**पुषणठ हस्ततारा पेपोररि तु चित्रिका ।**
**रुरेरोत स्मृता स्वाती तितुतेतो विशाखिका ॥ ९६ ॥**
**ननिनुनेऽनुराधर्क्षं ज्येष्ठा नोययियु स्मृता ।**
**येयोभभि मूलतारा पूर्वाषाढा भुधाफढा ॥ ९७ ॥**

भेभोजज्युत्तराषाढा जुजेजोखाभिजिद्भवेत् ।
खिखुखेखो श्रवणभं गगिगूगे धनिष्ठिका ॥ ५८ ॥
गोससिसू शतभिषा सेसोददि तु पूर्वभा ।
दुथझथोत्तराभाद्रा देदोचचि तु रेवती ॥ ५९ ॥

चुचेचोलेति चत्वारश्चरणा अश्विन्याः । एवं भरण्यादीनाम् । तत्र कृत्तिकादिक्रमेण अइउएओ एते पञ्चस्वराः पञ्चचरणा ज्ञेयाः । त एव वकारादिव्यञ्जनविशिष्टाः क्रमेण रोहिणीद्वितीयचरणादयः । तत्र घङछेत्यादिभिश्चतुर्षु स्थलेषु क्रमो व्यवहितोऽस्ति । अत्र ह्रस्वैर्दीर्घा अपि गृहीताः । यथा—नीलकण्ठ इत्युक्तेऽनुराधाद्वितीयचरण एव ज्ञातव्यः । तथा एकारेण ऐकारः ओकारेण औकारो गृहीतः स्थानप्रयत्नसाम्यात् । तथा वकारेण बकारः सावर्ण्यात् । सकारेण शकारोऽपि गृहीतः काशी वाराणसीत्यादौ दन्त्यस्थाने तालव्यस्यापि दर्शनात् । घकारादिभिर्घकारादयोऽपि गृहीताः । डकारेण ढकारोऽपि खकारेण षकारोऽपि गृहीतः। रेफेण ऋवर्णोपि । यत्र संयुक्तमक्षरं तत्र संयुक्तस्य प्रथममेव व्यंजनं ग्राह्यम् । तदुक्तं स्वरशास्त्रे—"संयोगाक्षरजे नाम्नि ज्ञेयं तत्रादिमाक्षरम् । खषौ शसौ बवौ चैव ज्ञेयाविति परस्परौ" इत्यादि ॥

अथैषामुपयोगं राशिलक्षणं च रामणीयकेनाह—

नक्षत्रमित्थं चतुरङ्घ्रिकं भवे-
न्नामाक्षरं जन्मनि तस्य युज्यते ।
राशिस्तथैको नवभिस्तदङ्घ्रिभि-
र्नवांशसंज्ञैरजतो विनाऽभिजित् ॥ ६० ॥

इत्थमनेन प्रकारेण चतुरङ्घ्रिकं चतुश्चरणात्मकं नक्षत्रं भवेत् । तस्य नक्षत्रस्य नामाक्षरं चु इत्यादि जन्मनि युज्यते । जन्मनाम्नि प्रयुज्यत इत्यर्थः । यथा—अश्विनीप्रथमचरणोत्पन्नस्य पुंसश्चुपूर्वकं जन्म-

नाम चूडामणिरिति। नवांशसंज्ञैः राशिनवांशरूपैर्नवभिस्तदङ्घ्रिभिस्तेषां चरणैरेको राशिर्भवति। ते च राशयः अजतो मेषादारभ्याभिजिन्नक्षत्रं विना क्रमेण ज्ञेया इत्यर्थः। यथा—अश्विनी भरणी कृत्तिकायाः प्रथमपादश्च मेषराशिः। कृत्तिकापादत्रयं रोहिणी मृगशिरसोर्धं च वृषभः। मृगशिरोर्धमार्द्रा पुनर्वसुपादत्रयं च मिथुनम्। पुनर्वसुपादः पुष्य आश्लेषा च कर्कः। एवमग्रेऽपि ॥

त्रिंशदंशो भवेद्राशिरंशः षष्टिकलात्मकः।
कला स्याद्विकलाषष्टिरंशभागलवाः समाः ॥ ६१ ॥

राशिस्त्रिंशदंशात्मको भवेत्। एकस्य राशेरंशास्त्रिंशदित्यर्थः। तथा एकस्यांशस्य कला लिप्तयः षष्टिरित्यर्थः। तथा एकस्याः कलायाः विकला विलिप्तयः षष्टिरित्यर्थः। अंशो भागो लवश्चेति समाः। पर्यायशब्दा इत्यर्थः ॥

एको नवांशः स्यादंशत्रयं नखकलाधिकम्।
एवं नव नवांशाः स्यू राशेर्नवविभागतः ॥ ६२ ॥

त्रिंशदंशात्मकस्य राशेरंशत्रयं विंशतिकलाश्चेति एको नवांशो भवति। एवमेकस्य राशेर्नवविभागतः नवभिर्विभाजनात् नवांशा नव स्युः ॥

मेषो वृषो मिथुनकर्कटसिंहकन्या
तौलिश्च वृश्चिकधनुर्मकराख्यकुम्भाः।
मीनश्च राशय इमे द्व्यधिका दशैव
चक्रं भचक्रमिति गोलविदो वदन्ति ॥ ६३ ॥

इमे मेषादयः द्वादश राशयः स्युः। इति भचक्रं राशिचक्रमेव गोलविदः चक्रमिति वदन्ति ॥

अथ मेषादीनां पर्यायानाह चतुर्भिः—

मेषः क्रियोऽजः प्रथमो द्वितीयो
वृषाभिधो गोवृषभश्च तावुरिः।

मोक्तस्तृतीयो मिथुनं नृयुग्मं
वीणा यमाख्यं जितुमं मनीषिभिः ॥ ६४ ॥
कर्ककर्कटकुलीरकर्किणः
स्याच्चतुर्थमथ पञ्चमं हरिः ।
सिंहसंज्ञमथ षष्ठमालयं
कन्यका युवति-योषिदित्यपि ॥ ६५ ॥
सप्तमं तुलतुलावणिक्पर्यं
तौलिजूकघटसंज्ञकं तथा ।
अष्टमर्क्षमलिकीटपृष्ठिकाः
स्यात्ततश्च नवमं धनुर्हयः ॥ ६६ ॥
धन्वी तौक्षिश्च दशमो नक्राख्यो मकरो मृगः ।
राशिरेकादशः कुम्भो द्वादशो मीनसंज्ञकः ॥ ६७ ॥

षष्ठमालयं षष्ठो राशिरित्यर्थः । शेषं स्पष्टम् ॥

अथ चरस्थिरादिभेदानाह—

चरस्थिरद्विस्वभावाः क्रूराक्रूरौ नरस्त्रियौ ।
विषमाविषमौ चेति पुनःपुनरजादयः ॥ ६८ ॥

पुनःपुनर्मेषादयश्चरस्थिरद्विस्वभावाः स्युः । यथा—मेषश्चरराशिः । वृषभः स्थिरराशिः । मिथुनं द्विस्वभावम् । एवं पुनरपि । कर्कश्चरः । सिंहः स्थिरः । कन्या द्विस्वभावा । एवं तुलादयोऽपि । तथा पुनःपुनः क्रूराक्रूरौ । मेषः क्रूरः । वृषभोऽक्रूरः । मिथुनं क्रूरम् । कर्कोऽक्रूरः । एवं सिंहादयः क्रमेण क्रूराक्रूराः । तथा नरस्त्रियौ । मेषो नरराशिः । वृषभः स्त्री । मिथुनं नरः । कर्कः स्त्री । एवं सिंहादयः । तथा विषमाविषमौ । मेषो विषमः । वृषभः समः एवं । मिथुनादयो विषमसमाः ॥

अथ जलराश्यादिभेदानाह सपादवृत्तेन—

जलेचरोऽन्त्यो मकरोत्तरं नराः
कुम्भाङ्गनायुग्मतुलाधनुः पुरः ।

चतुष्पदाः सिंहवृषक्रियाभिधा
नक्रस्य पूर्वं धनुषः परं दलम् ॥ ६९ ॥
कुलीरवृश्चिकौ कीटौ

अन्त्यो मीनः मकरस्योत्तरार्धं च जलेचरो जलराशिः कुम्भकन्यामिथुनतुलाः धनुषः पूर्वार्धं च नरराशयः । सिंहवृषमेषाः मकरस्य पूर्वार्धं धनुष उत्तरार्धं च चतुष्पदराशयः । कर्कवृश्चिकौ कीटसंज्ञौ ॥

राशिक्षेत्रगृहालयाः ।
वक्रारुधिराः पङ्गुमन्दकोणयमाः समाः ॥ ७० ॥

राशिः क्षेत्रं गृहमालयं चेति राशिपर्यायाः । वक्र आरो रुधिरश्चेति भौमस्य पर्यायाः । पङ्ग्वादयः शनैश्चरपर्यायाः ॥

पृष्ठोदया मृगधनुर्वृषकर्कटाजाः
शीर्षोदयास्तदपरे ह्युभयोदयोऽन्त्यः ।
रात्रिचरा यममृगाश्विवृषाजकर्का-
स्तेभ्यः परे दिनबला मुनिभिः प्रदिष्टाः ॥ ७१ ॥

मकरो धनुर्वृषभः कर्को मेषश्चेति पृष्ठोदया ज्ञेयाः । तथाऽपरे मिथुनसिंहकन्यातुलावृश्चिककुम्भाः शीर्षोदयाः । अन्त्यो मीन उभयोदयः पृष्ठोदयः शीर्षोदयश्च । मिथुनमकरधनुर्वृषभमेषकर्काः रात्रिचराः । रात्रिबला इत्यर्थः । तेभ्यः परे सिंहकन्यातुलावृश्चिककुम्भमीनाः दिनबलाः प्रदिष्टाः कथिताः ॥

अथ विष्कम्भादिसप्तविंशतियोगसंज्ञा आह त्रिभिः—

विष्कम्भः प्रीतिरायुष्मान्सौभाग्यः शोभनस्तथा ।
अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च ॥ ७२ ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रं सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः ॥ ७३ ॥
सिद्धः साध्यः शुभः शुक्लो ब्रह्मैन्द्रो वैधृतिस्तथा ।
स्वनामसदृशी ह्येषा योगानां सप्तविंशतिः ॥ ७४ ॥

स्वनामसदृशी। स्वनामसदृशं फलं ददातीत्यर्थः ॥

*अथ बवादिकरणसंज्ञास्तदुत्पत्तिं तत्स्वभावं चाह द्वाभ्याम्—*

**अथ बवबालवकौलवतैतिलगरवणिजविष्टयः सप्त।**
**शुक्लप्रथमोर्ध्वदलादष्टावृत्त्या चलानि करणानि ॥ ७५ ॥**
**शकुनिचतुष्पदनागाः किंस्तुघ्नाख्यं च चत्वारि।**
**वदिभूतोर्ध्वदलात्सितप्रथमाद्यदलावधि स्थिराणि स्युः॥७६**

बवादीनि सप्त करणानि तिथ्यर्धरूपाणि शुक्लप्रथमोर्ध्वदलाच्छुक्लप्रतिपद उत्तरदलमारभ्याष्टभिरावृत्तिभिर्भवन्ति। तानि चलानि चलस्वभावानि। शकुन्यादीनि चत्वारि वदिभूतोर्ध्वदलात्कृष्णचतुर्दश्युत्तरदलमारभ्य सितप्रथमाद्यदलावधि शुक्लप्रतिपत्प्रथमार्धमभिव्याप्य स्थिराणि स्थिरस्वभावानि स्युः ॥

अथ ग्रहाणां पुंस्त्वादिभेदांस्तत्स्वभावांश्चाह द्वाभ्याम्—

**रविकुजगुरवः पुरुषाः स्त्रियौ सितेन्दू बुधार्कजौ क्लीबौ।**
**सौम्यौ सुरासुरेज्यौ कुजरविरविजागुकेतवः पापाः॥७७॥**

सूर्यभौमगुरवः पुरुषग्रहाः। शुक्रचन्द्रौ स्त्रियौ। बुधमन्दौ नपुंसकौ। तथा गुरुभार्गवौ सौम्यौ शुभग्रहौ। भौमरविशनिराहुकेतवः पापग्रहाः ॥

**शुक्लपक्षे शशी सौम्यः पापः स्यात्कृष्णपक्षतः।**
**बुधः स्वभावात्सौम्योऽपि पापः पापस्य योगतः॥ ७८ ॥**

शुक्ले चन्द्रः शुभग्रहः। कृष्णपक्षतः कृष्णपक्षे। सप्तम्यर्थे तसिः। चन्द्रः पापः स्यात्। पापग्रहस्य योगाद्बुधः पापः। अन्यथा शुभः ॥

अथ ग्रहस्वरूपमाह—

**प्रकाशमानौ सूर्येन्दू पञ्च ताराग्रहाः कुजात्।**
**तमोग्रहौ राहुकेतू शनिवत्फलमेतयोः॥ ७९ ॥**

सूर्याचन्द्रमसौ प्रकाशमानस्वरूपौ। भौमादयः पञ्च ग्रहास्तारारूपाः। राहुकेतू तमोरूपौ ग्रहौ। राहुकेत्वोः फलं शनैश्चरफलेन तुल्यम् ॥

**दिनपतिना युतिरस्तं चन्द्रेण समागमो मिथो युद्धम् ।**
**ज्ञेयं ताराद्युसदां तत्रास्तं युद्धभं च परिजह्यात् ॥ ८० ॥**

ताराद्युसदां ताराग्रहाणां भौमादीनां दिनपतिना सूर्येण युतिर्योगोऽस्तसंज्ञः । चन्द्रेण युतिः समागमाख्या । मिथः परस्परं युतिर्युद्धमित्युच्यते।तज्ज्ञानं तु ग्रहलाघवादौ "पञ्चर्त्वगाङ्गविशिखाः पृथगीशकर्ण—" इत्यादिना स्पष्टमुक्तम् । तत्रास्तं युद्धनक्षत्रं च परिजह्यात् । अस्तपरिमाणमुक्तं वसिष्ठेन—"वृद्धत्वमिन्दोस्त्रिदिनं दिनार्धे बालत्वमस्तत्वमहर्द्वयं च । येनोक्तमेकं दिवसं शिशुत्वमित्येतदिन्दोस्तदयुक्तमेव" इति । युद्धभं षण्मासं जह्यात्—इति वक्ष्यति ॥

**प्रचेतसो दिश्युदयः सितद्युते-**
**र्हरेर्हरित्येव शनीज्यभूभुवाम् ।**
**प्राच्यां प्रतीच्यां च सितेन्दुपुत्रयो-**
**रैन्द्र्यां स्फुटः प्रात्यहिको ग्रहोदयः ॥ ८१ ॥**

अस्तानन्तरं सितद्युतेश्चन्द्रस्योदयः प्रचेतसो वरुणस्य दिशि । पश्चिमायामित्यर्थः । शनीज्यभूभुवां शनिगुरुभौमानामुदयः हरेर्हरिति इन्द्रस्य दिशि । पूर्वस्यामित्यर्थः । सितः शुक्र इन्दुपुत्रो बुधस्तयोरुदयस्तु प्राच्यां प्रतीच्यां च भवति। अथ प्रात्यहिकः प्रतिदिनभवो ग्रहाणां सूर्यादीनां सर्वेषामुदय ऐन्द्र्यां प्राच्यां स्फुटः प्रतीयते ॥

**यदा पराङ्वक्रगतिर्नभश्चर-**
**स्तदा स वक्री न शशी न भास्करः ।**
**तमःशिखी द्वौ तु सदैव वक्रिणौ**
**तथा मिथः सप्तमराशिचारिणौ ॥ ८२ ॥**

यदा नभश्चरो भौमादिग्रहः पराङ्वक्रगतिर्विलोमगतिर्भवति तदा स ग्रहो वक्रीत्युच्यते । शशिभास्करौ कदापि वक्रिणौ न भवतः । तमो राहुः शिखी केतुरेतौ सदैव वक्रिणौ स्तः । तथा मिथः सप्तमराशिचारिणौ स्वाधिष्ठितराशेः सकाशात्सप्तमराशौ चरतः ॥

वर्षेण सूर्यज्ञसिताः सितांशुर्मासेन मासैर्द्वियमैर्महीजः ।
वर्षैर्गुरुर्द्वादशभिर्भचक्रं वर्षैः खरामैर्भ्रमतीनसूनुः ॥ ८३ ॥

सूर्यज्ञसिताः । रविबुधभार्गवाः एकेन वर्षेण भचक्रं द्वादशराश्यात्मकं चक्रं भ्रमन्ति । उलङ्घयन्तीत्यर्थः । सितांशुश्चन्द्र एकेन मासेन । महीजो भौमो द्वियमैर्द्वाविंशत्या मासैः । गुरुर्द्वादशभिर्वर्षैः । इनसूनुः शनैश्चरः खरामैस्त्रिंशता वर्षैर्भचक्रं भ्रमति ॥

उदयशिखरिलग्नं राशिमाहुर्विलग्नं
चरमगिरिगतं तत्सप्तमं चास्तसंज्ञम् ।
दशममिति खमध्ये संस्थितं चोर्ध्वदेशे
समधिगतमधस्तात्तं चतुर्थं वदन्ति ॥ ८४ ॥

उदयशिखरिलग्नं उदयाचलसङ्गतं राशिं विलग्नमाहुः । चरमगिरिगतं अस्ताचलं प्राप्तं तल्लग्नं अस्तसंज्ञमाहुः । तत्सप्तमम् । उदयलग्नादिति शेषः । खोर्ध्वदेशे खमध्ये संस्थितं दशममिति वदन्ति । खस्मादधस्तात्समधिगतं लग्नं चतुर्थमिति वदन्ति । अत एवास्य पातालमिति संज्ञा ॥

अहर्निशं भ्रमत्येवं भचक्रं पश्चिमामुखम् ।
भ्रमन्त्यत्र गताः खेटाः कीटवत्पूर्वदिङ्मुखाः ॥ ८५ ॥

एवं भचक्रं पश्चिमामुखं अहर्निशमहोरात्रं भ्रमति । अत्र चक्रे विद्यमानाः खेटाः सूर्यादयः पूर्वदिङ्मुखाः भ्रमन्ति । चक्रे पूर्वदिक्तः पश्चिमाभिमुखं भ्रमति ग्रहास्तु तद्विपरीतं गच्छन्तीत्यर्थः । तत्र दृष्टान्तमाह—कीटवदिति । यथा कुलालचक्रे कीटानां चक्रवशात्स्वतश्च गतिद्वयमविरुद्धम् । एवं ग्रहाणामपि उभयदिङ्मुखं गतिद्वयमविरुद्धमिति भावः । तदुक्तं श्रीभागवते—"यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव । प्रदेशान्तरेष्वप्युपलभ्यमानत्वात् । एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रद-

क्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रान्तरे राश्यन्तरे चोपलभ्यमानत्वात्" इति ॥

**लग्नात्केन्द्रं पणफरमापोक्लिममित्यसव्यतो गण्यम् ।**
**यद्यपि सव्येऽसव्ये न विशेषस्तदपि भक्रमस्तादृक् ॥८६॥**

लग्नादुदयराशिमारभ्य केन्द्रादयः संज्ञाः वामतो गत्वा पुनःपुनर्भवन्ति । यद्यपि सव्येऽसव्ये च गणने विशेषो नास्ति तथापि राशिक्रमो वामत एव ज्ञेय इत्यर्थः । यथा—लग्नं केन्द्रसंज्ञकं तस्माद्द्वितीयं पणफरसंज्ञकं ततोऽग्रिममापोक्लिममेवं लग्नाच्चतुर्थं केन्द्रं पञ्चमं पणफरसंज्ञकं षष्ठमापोक्लिमं सप्तमं केन्द्रमष्टमं पणफरमित्यादि ॥

अथ लग्नादीनां पर्यायशब्दानाह चतुर्भिः—

**लग्नं विलग्नतनुमूर्त्युदयाङ्गमाद्य-**
**मर्थः कुटुम्बधनसंज्ञमिह द्वितीयम् ।**
**दुश्चिक्यसोदरसहोदरविक्रमाख्यं**
**ज्ञेयं तृतीयभवनं च ततश्चतुर्थम् ॥ ८७ ॥**

लग्नादय उदयराशेः पर्यायाः । अर्थादय उदयाद्द्वितीयराशेः । उदयात्तृतीयं दुश्चिक्यादि सञ्ज्ञम् । उदयाच्चतुर्थं पातालं बान्धवं हिबुकं अम्बु सौख्यमित्येतत्संज्ञकं स्यात् ॥

**पातालबान्धवसुहृद्धिबुकाम्बु सौख्यं**
**स्यात्पञ्चमं सुतमतिप्रतिभाभिधानम् ।**
**षष्ठं रिपुक्षतमथ द्युनयोषिदस्तं**
**जामित्रमन्मथमिदं खलु सप्तमं स्यात् ॥ ८८ ॥**

लग्नात्पञ्चमं स्थानं सुतः मतिः प्रतिभा एतन्नामकम् । लग्नात्षष्ठं रिपुः क्षतमित्येतत्सञ्ज्ञकम् । द्युनादयो लग्नात्सप्तमस्य संज्ञाः ॥

**स्यादष्टमं मृतिपराभवरन्ध्रसंज्ञं**
**धर्मस्तपो गुरुशुभं नवमं च भाग्यम् ।**

मेषूरणास्पदखशासनकर्ममध्य-
व्यापारमाननरपं दशमं वदन्ति ॥ ८९ ॥

लग्नादष्टमं मृत्यादिसंज्ञकम् । लग्नान्नवमं धर्मादिसंज्ञकम् । लग्नाद्दशमं मेषूरणं आस्पदं खं शासनं कर्म मध्यं व्यापारः मानः नरपः एवं वदन्ति ॥

एकादशमुपान्त्यायलाभमाप्तिभवागमम् ।
द्वादशं व्ययरिःफान्त्यं ज्ञेयं पर्यायतः परम् ॥ ९० ॥

लग्नादेकादशमुपान्त्यमायः लाभः प्राप्तिः भव आगम इति ज्ञेयम् । लग्नाद्द्वादशं व्ययः रिःफमन्त्यमिति ज्ञेयम् । परमन्यच्च नाम एतेषां पर्यायतः स्वबुद्ध्या ज्ञेयम् । यथा तनोः पर्याया देहादयः । अर्थस्य पर्याया धनादयः ॥

अथ केन्द्रादिपर्यायानाह—

केन्द्रकण्टकचतुष्टयसंज्ञा लग्नबान्धववधूदशमानाम् ।
त्रित्रिकोणमुदितं नवमर्क्षं स्यात्त्रिकोणमिह धीर्नव पञ्च॥९१॥

निलग्नचतुर्थसप्तमदशमानां चतुर्णामपि केन्द्रादिसंज्ञात्रयम् । लग्नान्नवमं त्रित्रिकोणमिति कथितम् । लग्नात्पञ्चमं नवमं चेत्युभयं त्रिकोणसंज्ञकम् ॥

उपचयभवनं त्रिषड्दशैकादशमुदितं चतुरस्रमष्टतुर्यम् ।
हरिवृषमथमाङ्गनाहयाङ्गतुलकलशा रवितस्त्रिकोणमाद्यैः ॥९२॥

त्रिषड्दशैकादशस्थानमुपचयसंज्ञम् । अष्टमं चतुर्थं चेत्युभयं चतुरस्रसंज्ञम् । रवितः सूर्यमारभ्य क्रमेण सिंहादिकं त्रिकोणमुक्तम् । आद्यैः कविभिः । यथा—रवेस्त्रिकोणं सिंहः । चन्द्रस्य त्रिकोणं वृषभः । भौमस्य मेषः । बुधस्य कन्या । गुरोर्धनुः भृगोस्तुला । शनेः कुम्भ इति ॥

अथोच्चपरमोच्चान्याह सार्धेन—

उच्चं मेषो वृषो नक्रः कन्या कर्को झषस्तुला ।
तत्र दिग्भिर्गुणैरष्टयमैः शरकुभिः शरैः ॥ ९३ ॥

**भैर्नखैः परमोच्चं स्यात्सूर्यादीनामनुक्रमात् ।**

सूर्यादीनां मेषादयः क्रमेणोच्चस्थानानि । यथा—रवेर्मेषः । चन्द्रस्य वृषः । भौमस्य नक्रं मकरः । एवम् । तत्र मेषादिषु क्रमेण दिगादिभिर्भागैः परमोच्चं स्यात् । यथा—मेषस्य दशमांशे रवेः परमोच्चम् । एवं वृषस्य तृतीयांशे विधोः । मकरस्याष्टाविंशे भौमस्य । एवं परत्र ॥

अथ नीचस्थानमाह—

**इत्युच्चात्सप्तमं नीचं तारतम्यं तदन्तरे ॥ ९४ ॥**

इत्युच्चादिति । उच्चस्थानात्सप्तमं स्थानं नीचम् । यथा—रवेस्तुला नीचस्थानम् । एवं विधोर्वृश्चिक इत्यादि । तैरेवांशैरेषां परमं नीचानीचं भवति । तदन्तरे उच्चपरमोच्चाभ्यन्तरे उच्चत्वस्य तारतम्यम् । एवं नीचपरमनीचाभ्यन्तरेऽपि । यथा—मेषस्य प्रथमांशोऽप्युच्चमेव । तमारभ्य तारतम्येनादशमांशमुच्चत्वोत्कर्षः । दशमांशस्तु परमोच्चम् । तत आराश्यन्तमुच्चत्वापकर्षः । एवं नीचत्वेऽपि ॥

अथ ग्रहदृष्टिमाह—

**त्र्याशं कोणं तुर्यरन्ध्रं सप्तमं सकला ग्रहाः ।**
**पादं द्विपादं पादोनं पूर्णं पश्यन्त्यनुक्रमात् ॥ ९५ ॥**

सर्वे ग्रहा यस्मिन्यस्मिन् स्थाने स्थितास्तस्मात्तस्मात्स्थानात्कथ्यमानानि स्थानानि पादादिक्रमेण पश्यन्ति । यथा—त्र्याशं तृतीयं दशमं च एकपाददृष्ट्या पश्यन्ति । कोणं नवमं पञ्चमं च द्विपाददृष्ट्या पश्यन्ति । तुर्यरन्ध्रं चतुर्थमष्टमं च त्रिचरणदृष्ट्या । सप्तमं पूर्णदृष्ट्या ॥

अथात्र दृष्टौ विशेषमाह—

**शनिस्त्र्याशं गुरुः कोणं तुर्यरन्ध्रं महीसुतः ।**
**पूर्णं विशेषात्पश्यन्ति फलं यच्छन्ति तादृशम् ॥ ९६ ॥**

शनिस्तृतीयं दशमं च पूर्णदृष्ट्या पश्यति । न तु पाददृष्ट्या । एवं गुरुः कोणम् । भौमस्तुर्यरन्ध्रं पूर्णदृष्ट्या । अथ दृष्टिजन्यफलभेदमाह—फलमिति । तादृशं दृष्टितारतम्यानुसारम् ॥

अथ मुहूर्तस्य लक्षणमाह—

**मुहूर्तमह्नो रात्रेश्च प्रोचुः पञ्चदशं लवम् ।**
**केचिच्छुभक्रियायोग्यकालं केचिद्घटीद्वयम् ॥ ९७ ॥**

दिवसस्य रात्रेश्च पञ्चदशं भागं मुहूर्तं प्रोचुः । केचित्तु शुभकर्मार्हं कालं मुहूर्तं प्रोचुः । केचिद्घटीद्वयं मुहूर्तमाहुः ॥

प्रकरणमुपसंहरति—

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।**
**मुहूर्तोचितसंज्ञानां रघुनाथो निरूपणम् ॥ ९८ ॥**

सरसदैवज्ञस्य पुत्रो ज्योतिर्विद्रघुनाथः मुहूर्तोपयोगिसंज्ञानां निरूपणं चक्रे । कथंभूतः कविकण्ठीरवः कविषु सिंह इव ॥

इति सुखठाणकरोपाह्वभट्टरामचन्द्रसुत-श्रीमन्महेश्वरभट्टविरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां संज्ञाप्रकरणं प्रथमम् ॥

---

## त्याज्यात्याज्यप्रकरणम् २

अथ त्याज्यात्याज्यप्रकरणं व्याख्यायते । तत्र कविर्योगविशेषान्प्रतिजानीते—

**अथात्र तावत्तिथिवारतारका-**
**मुहूर्तयोगायनमासपक्षतः ।**
**भवन्ति योगा विविधाः शुभाशुभाः**
**केषांचिदेषां ग्रहमग्रहं ब्रुवे ॥ १ ॥**

अथ संज्ञाकथनानन्तरं अत्र मुहूर्तमालायां तावदादौ तिथ्यादेः परस्परयोगादनेकविधाः शुभाशुभा योगा भवन्ति । तत्रैषां केषांचिद्योगानां ग्रहं संग्रहं अग्रहं आग्रहं त्यक्त्वा ब्रुवे वक्ष्यामीत्यर्थः ॥

**तुल्यकलाधरकलयोर्न विशेषः शुक्लकृष्णयोः कोऽपि ।**
**तदपि कलोपचयत्वाच्छुक्लः श्रेयान्न तादृशः कृष्णः ॥ २ ॥**

तुल्याः शुक्ले द्वितीयामारभ्यानुलोम्येन कृष्णे चतुर्दशीमारभ्य प्रातिलोम्येन गणनायां समाः कलाधरस्य कलाः ययोस्तयोः शुक्लकृष्णयोः कोऽपि भेदो नास्ति । तथापि कलोपचयत्वात् कलाभिवृद्धेर्हेतोः शुक्लपक्षः श्रेष्ठः कृष्णपक्षस्तु तादृशो न भवति ॥

अथ तिथीनां संज्ञापूर्वकं फलमाह—

**नंदा भद्रा जया रिक्ता पूर्णा स्यावर्तिता तिथिः ।**
**शुक्लेऽधममध्यश्रेष्ठाः कृष्णे श्रेष्ठसमाधमाः ॥ ३ ॥**

प्रतिपदादिपञ्च तिथयः क्रमेण नन्दादिसंज्ञाः । एवं षष्ठ्यादयोऽपि पुनः पुनरावर्तिता नन्दादिसंज्ञिका भवन्ति । ताः स्वनामसदृक्फलाः स्युः । तत्र शुक्लपक्षे प्रतिपदाद्याः पञ्च अधमाः । षष्ठ्याद्याः पञ्च मध्यमाः । एकादश्याद्याः पञ्च श्रेष्ठाः । एवं कृष्णे क्रमेण श्रेष्ठा मध्यमा अधमाः स्युः ॥

अथ पक्षरन्ध्रतिथीराह—

**युग्मास्त्याज्याः पक्षरन्ध्रं द्वितीयां दशमीं विना ।**
**विषमाः सकलाः श्रेष्ठा विहाय नवमीमिमाम् ॥ ४ ॥**

चतुर्थी षष्ठी अष्टमी नवमी द्वादशी चतुर्दशी चेति पक्षरन्ध्रतिथयस्त्याज्या इत्यर्थः । आवश्यकत्वे स्वपवादं वक्ष्यति ॥

अथामृततिथीराह—

**अमृतोक्ता भौमभान्वोर्नन्दा भद्रेन्दुशुक्रयोः ।**
**जया बुधे गुरौ रिक्ता शनौ पूर्णा तिथिर्बुधैः ॥ ५ ॥**

भौमे रवौ च नन्दा तिथिरमृता बुधैरुक्ता । एवं सोमे शुक्रे च भद्रातिथिरमृतेत्यादि ॥

अथ क्रकचादिनिन्द्ययोगानाह—

**क्रकचः स्याद्वारतिथ्योर्यदि योगे त्रयोदश ।**
**संवर्तः प्रतिपत्सौम्ये सप्तम्यर्केऽतिनिन्दितौ ॥ ६ ॥**

अमृतसिद्धियोगानाह—

करमृगहयमित्रेज्यान्त्यतूर्याणि सूर्या-
त्सततममृतसिद्धीन्याहुराधा मुनीन्द्राः ।
घटझषवृषयुग्माजाङ्गनाकौर्पिजूका-
श्वशशिभमृगसिंहान् चैत्रतः शून्यराशीन् ॥ १४ ॥

सूर्यादिवारादौ हस्तादिनक्षत्राणि अमृतसिद्धीनि स्युः । यथा—रवौ हस्तः । सोमे मृगः । भौमेऽश्विनी । बुधेऽनुराधा । गुरौ पुष्यः । भृगौ रेवती । शनौ रोहिणी ॥ चैत्रतः चैत्रमासमारभ्य क्रमेण कुम्भादीन् शून्यराशीनाहुः । यथा—चैत्रे कुम्भः । वैशाखे मीनः । ज्येष्ठे २ । आषाढे ३ । श्रावणे १ । भाद्रपदे ६ । आश्विने ८ । कार्तिके ७ । मार्गशीर्षे ९ । पौषे ४ । माघे १० । फाल्गुने ५ ॥

अथ शून्यराशीराह द्वाभ्याम्—

चैत्रे गोष्टौ माधवे द्वादशी स्या-
द्भाद्रे त्वेके श्रावणे द्वित्रिसंख्ये ।
पौषे वेदाशा इषे दिङ्महेशा
मार्गेऽगाष्टौ पक्षयोः शून्यतिथ्यः ॥ १५ ॥

चैत्रादिश्लोकोक्तमासेषु पक्षयोः शुक्लपक्षे कृष्णपक्षेऽपि नवम्यष्टम्यादयः शून्यतिथ्यः । यथा—चैत्रे शुक्लपक्षे गोष्टौ नवम्यष्टम्यौ शून्यतिथी । कृष्णपक्षेऽप्येत एव शून्यतिथी । माधवे वैशाखे शुक्ले कृष्णे च द्वादशी । भाद्रे शुक्ले कृष्णेऽपि द्वितीया प्रतिपच्च । श्रावणे द्वितीयातृतीये । पौषे चतुर्थीपञ्चम्यौ । आश्विने दशम्येकादश्यौ । मार्गे सप्तम्यष्टम्यौ ॥

ज्येष्ठाषाढोर्जमाघान्त्ये विश्वाद्रिमनुषट्त्रयः ।
शुक्ले शून्याः क्रमात्कृष्णे मन्वङ्गेषुशराब्धयः ॥ १६ ॥

ऊर्जः कार्तिकः । अन्त्यः फाल्गुनः । एषु ज्येष्ठादिषु शुक्ले उक्तास्त-

योदश्याद्य शून्या ॥ यथा—ज्येष्ठे शुक्ले निशे त्रयोदशी । आषाढे शुक्ले अद्य सप्तमी । एवं कार्तिके चतुर्दशी । माघे षष्ठी । फाल्गुने तृतीया ॥ अथ एव्वेव मासेषु कृष्णपक्षे चतुर्दश्याद्य शून्या ॥ यथा—ज्येष्ठे कृष्णे चतुर्दशी । एवमाषाढे षष्ठी । कार्तिके पञ्चमी । माघे पञ्चमी । फाल्गुने चतुर्थी ॥

अथ शून्यनक्षत्राणि तत्फलं चाह सार्धेन—

रोहिण्यश्वे स्वातिचित्रे उपेज्यौ
पूफावस्वृक्षे श्रवोवैश्वभे च ।
पाश्यन्त्यर्क्षे पूर्वभाद्राग्निपित्र्ये
चित्राद्वीशौ हस्तशैवाश्विभानि ॥ १७ ॥
मूलश्रोत्रे शाक्रयाम्ये च चैत्रा-
च्छून्यान्याहुर्नामतो व्यर्थतश्च ।

चैत्रे रोहिण्यश्विन्यौ शून्यनक्षत्रे । एवं वैशाखे स्वातिचित्रे । ज्येष्ठे उत्तराषाढापुष्यश्च । आषाढे पूर्वाफल्गुनी धनिष्ठा च । श्रावणे श्रवणो त्तराषाढे । भाद्रे शततारा रेवती च । आश्विने पूर्वाभाद्रपदा । कार्तिके कृत्तिका मघा च मार्गे चित्रा विशाखे । पौषे हस्त आर्द्राश्विनी च । माघे मूलश्रवणौ । फाल्गुने ज्येष्ठाभरण्यौ । एतानि भानि नाम्ना कार्यस्य व्यर्थत्वेन च शून्यान्याहुः ॥

अत्रान्यदप्याह—

वर्ज्यं यात्रोद्वाहगेहप्रवेशे
सौरिब्राह्मं पूज्यपुष्यः कुजाश्वम् ॥ १८ ॥

सौरिब्राह्मं शनिवारे रोहिणी सा यात्राया वर्ज्या । उद्वाहे विवाहे गुरुपुष्यो वर्ज्यः । गृहप्रवेशे कुजाश्वं भौमाश्विनी वर्ज्या ॥ उक्तं च— "गृहप्रवेशे यात्रायां विवाहे च यथाक्रमम् । भौमेऽश्विनी शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत् ॥" इति ॥

अथ घातचन्द्रानाह—

**मेषः कन्या घटः सिंहो नक्रः युग्मं धनुर्वृषः ।**
**मीनः सिंहो धनुः कुम्भोऽजादीनां घातचन्द्रमाः ॥ १९॥**

मेषवृषादिजन्मराशीनां मेषकन्यादिराशिस्थश्चन्द्रः क्रमेण घातचन्द्रमा उच्यते ॥ यथा—मेषजन्मराशेर्मेषस्थ एव घातचन्द्रः । एवं वृषभस्य कन्यास्थः । मिथुनस्य कुम्भस्थः । कर्कस्य सिंहस्थः । सिंहस्य मकरस्थः । कन्याया मिथुनस्थः । तुलाया धनुस्थितः वृश्चिकस्य वृषस्थः । धनुषो मीनस्थः । मकरस्य सिंहस्थः । कुम्भस्य धनुस्थः । मीनस्य कुम्भस्थः ॥

अथ नामाद्याक्षरग्रहणे नामग्रहणसंप्रदायमनुसृत्य मेषादिजन्मराशीना घाततिथ्यादिकमाह—

**घाततिथ्यो न-पू-भा-भा-ज-पू-रि-न-ज-री-ज-पूः ।**
**घातवारा र-शा-चं-बु-श-श-गुः-शु-शु-मं-गु-शु ॥ २० ॥**

मेषजन्मराशेर्नन्दा घाततिथिः । वृषस्य पूर्णा । मिथुनस्य भद्रा । कर्कस्य भद्रा । सिंहस्य जया । कन्यायाः पूर्णा । तुलाया रिक्ता । वृश्चिकस्य नन्दा । धनुषो जया । मकरस्य रिक्ता । कुम्भस्य जया । मीनस्य पूर्णा ॥ अथ घातवाराः—मेषस्य रविवारः । एवं वृषादीनां शनिचन्द्रबुधशनिशनैश्चरगुरुशुक्रभृगुमङ्गलगुरुभार्गवाः क्रमेण ॥

अथ घातनक्षत्राण्याह—

**घातर्क्षं च मघाहस्तस्वातिमित्रास्त्रपाच्युताः ।**
**शतान्त्यभरणीब्राह्मशैवाश्लेषाश्च मेषतः ॥ २१ ॥**

मेषतः मेषादिजन्मराशेः क्रमात् मघादिघातनक्षत्रम् ॥ मित्रमनुराधा । अस्त्रपो मूलम् । अच्युतः श्रवणः । शतं शततारा । अन्त्यं रेवती । शैवमार्द्रा । इदं घातचतुष्टयं यात्रादौ वर्ज्यम् ॥

अथात्र घातचतुष्टयेऽनुमितश्रुतिं प्रमाणयति—

**यद्यप्यार्षं वचनं न लभ्यते घातचन्द्रादौ ।**
**लुप्ता श्रुतिरनुमेया शिष्टाचारेण किं पुनर्मुनिवाक् ॥२२॥**

यद्यपि घातचन्द्रादौ आर्षं ऋषिप्रोक्तं वचनं न लभ्यते तथापि शिष्टाचारेण लिङ्गेन लुप्ता श्रुतिरनुमीयते । यथा—'मङ्गलं श्रुतिबोधितकर्तव्यताकम् । अलौकिकाविगीतशिष्टाचारविषयत्वात् । दर्शादिवत् ।' इति । तथात्र मुनिवागनुमेयेति किं पुनर्वक्तव्यम् ॥ तथाच प्रयोगः । घातचन्द्रादिकं स्मृतिमूलकम् । अलौकिकत्वे सति शिष्टैः कथितत्वात् । शून्यतिथ्यादिवत् । इति ॥ अनेनेतरस्मिन्सर्वत्र प्रमाणभूतान्यार्षवचनानि लभ्यन्त इति सिद्धम् । तानि विस्तरभियात्र न लिख्यन्ते । दिदृक्षवस्तु प्रमिताक्षरादीपिकादौ पश्यन्तु ॥

अथ पर्वाण्याह—

**पर्वाणि सूर्यसङ्क्रान्तिरमावास्या च पूर्णिमा ।**
**चतुर्दश्यष्टमी कृष्णा पञ्चैतानि त्यजेच्छुभे ॥ २३ ॥**

सूर्यसङ्क्रान्तिः सूर्यस्याधिष्ठितराशेः राश्यन्तरसङ्क्रमः । शेषं स्पष्टम् । शुभे गर्भाधानादौ ॥

अथ शून्यलग्नान्याह—

**विषमतिथिषु पक्षादेः क्रमात्तौलिनक्रौ**
**हरिणहरिणनाथौ युग्मकन्ये नवाब्धी ।**
**अपि मृगपतिकर्कौ धन्विमीनौ द्विमीनौ**
**मुनिभिरिति निकृष्टे शून्यलग्ने प्रदिष्टे ॥ २४ ॥**

पक्षादेः शुक्लपक्षस्य कृष्णपक्षस्य च प्रतिपदमारभ्य विषमतिथिषु क्रमात्तुलामकरादीनि शून्यलग्नानि । यथा—प्रतिपदि तुलामकरौ । तृतीयायां हरिणो मकरः हरिणनाथः सिंहः एतौ । पञ्चम्यां मिथुनक-

१ दैवज्ञरामविरचितमुहूर्तचिन्तामणिटीका. २ 'मकरो मृगास्यः' इत्युक्तत्वात्.

न्यके । सप्तम्या धनुःकर्कौ । नवम्या सिंहकर्कौ । एकादश्या धनुर्मीनौ । त्रयोदश्यां वृषमीनौ । एते शून्यलग्ने मुनिभिर्निकृष्टे प्रदिष्टे निन्द्ये कथिते ॥

अथ दग्धतिथीराह—

**चापान्त्ये वृषकुम्भे क्रियकर्के पूष्णि कन्यकामिथुने ।**
**अलिसिंहे नक्रतुले दग्धास्तिथ्यः समा द्वितीयाद्याः ॥२५॥**

चापादि तत्तद्राशिद्वये पूष्णि सूर्ये स्थिते सति द्वितीयाद्या उभयपक्षसाधारणाः समसंख्याकास्तिथ्यो दग्धाः । यथा—धनुर्मीनगते सूर्ये द्वितीया दग्धा । वृषकुम्भगते चतुर्थी । मेषकर्कगते षष्ठी । कन्यामिथुनगेऽष्टमी । वृश्चिके सिंहे च दशमी । मकरे तुलाया च द्वादशी दग्धेत्यर्थः ॥

अथ त्रिपुष्करयोगं सफलमाह—

**त्रिपुष्कराख्योऽदितिवह्निविश्वद्वीशाजपादर्यमभेषु योगः ।**
**भद्राख्यतिथ्योऽर्ककुजार्कजाश्चेच्छुभाशुभेषु त्रिगुणः प्रदिष्टः॥२६**

अदितिः पुनर्वसू वह्निः कृत्तिका विश्वे उत्तराषाढा द्वीशं विशाखा अजपात् पूर्वाभाद्रपदा अर्यमोत्तराफल्गुनी । एषु भेषु भद्राख्यतिथ्यो द्वितीयासप्तमीद्वादश्यः तथार्ककुजार्कजाश्च रविभौमशनिवाराश्चेत्त्रिपुष्कराख्यो योगः स्यात् ॥ शुभे वस्तुलाभादौ अशुभे मरणादौ त्रिगुणः प्रदिष्टः कथितः । तद्दिने यदि किंचिद्वस्तु लब्धं तदा त्रिगुणतद्वस्तुलाभः । यदि कश्चिन्म्रियते तदीयास्त्रयो म्रियेरन् । यदि किंचिद्वस्तु विनष्टं तदा तस्य वस्तुत्रयविनाश इति ॥

अथ द्विपुष्करमाह—

**द्विपुष्करो द्विगुणदश्चित्राचान्द्रवसुष्वपि ।**
**त एव तिथिवाराश्चेदुर्वा कैश्चिदुच्यते ॥ २७ ॥**

त एव तिथिवाराः भद्राख्यतिथयोऽर्कभौमशनिवाराः चित्रामृगशिरोधनिष्ठासु चेद्विपुष्कराख्यो योगो द्विगुणफलदः। शुभाशुभेषु ॥

अथानन्दादियोगानाह त्रयेण—

**आनन्दः कालदण्डश्च धूम्रो धाताऽथ सौम्यकः।**
**ध्वाङ्क्षो ध्वजश्च श्रीवत्सो वज्रमुद्गरछत्रकम् ॥ २८ ॥**
**मित्रमानसपद्मानि लुम्बकोत्पातमृत्यवः।**
**काणसिद्धिशुभाख्याः स्युरमृतं मुसलं गदः ॥ २९ ॥**
**कुञ्जरो राक्षसचरस्थिराख्या वर्धमानकः।**
**एतेऽष्टाविंशतिर्योगाः स्वस्वनामसदृक्फलाः ॥ ३० ॥**

स्वस्वनाम्नः सदृक् तुल्यं फलं येभ्यस्ते तथा ॥

अथैषां गणनोपायमाह—

**दास्रान्मृगादहेर्हस्तान्मित्राद्वैश्वाच्च वारुणात्।**
**गण्याः सूर्यादिवारेषु दिनर्क्षावध्यनुक्रमात् ॥ ३१ ॥**

सूर्यादिवारेषु दास्रादिमृगादिक्रमेण यावद्दिननक्षत्रं गण्याः। यथा—रवौ दास्रादश्विनीमारभ्य दिननक्षत्रपर्यन्तं गणयेत्। एवं सोमे मृगशीर्षात्। भौमे अहेराश्लेषातः। बुधे हस्तात्। गुरौ अनुराधातः। शुक्रे उत्तराषाढातः। शनौ शततारातः। अत्र साभिजिद्गणना कार्या यतोऽष्टाविंशतिर्योगाः। यथा—रविवारे दिनर्क्षं श्रवणस्तदश्विनीतः साभिजिद्गणनया त्रयोविंशं भवति तावत्संख्यो गदयोगः प्राप्तः। एवमिन्दुवारे मृगशीर्षाद्गणनया श्रवण एकोनविंशोऽतः आनन्दादिषु सिद्धियोगो ज्ञेयः ॥

अथैषु कियतां दुष्टयोगानामावश्यककृत्ये परिहारमाह सार्धेन—

**पद्मे लुम्बे चतुर्नाड्यो द्वे मुसलकाणयोः।**
**ध्वाङ्क्षमुद्गरवज्राणां पञ्च सप्तगदाह्वये ॥ ३२ ॥**
**धूम्रे त्वेकां चरे तिस्रः कर्मण्यावश्यके त्यजेत्।**

यथा प्रतिपदि वैधमुत्तराषाढा । द्वितीयायामनुराधा । तृतीयायामुत्तराफल्गुनी । पञ्चम्यां मघा । षष्ठ्यां रोहिणी । सप्तम्यां हस्तः । अष्टम्यां पूर्वाभाद्रपदा । नवम्यां कृत्तिका । एकादश्यां रोहिणी । द्वादश्यां सार्पम् । त्रयोदश्यां चित्रेति ॥

अथ केषांचित्प्रागुक्तयोगानां परिहारमाह—

**विष्कम्भवज्रयोस्तिस्रः षट् च गण्डातिगण्डयोः ।**
**परिघार्धं पञ्च शूले व्याघातेऽङ्कघटीस्त्यजेत् ॥ ३८ ॥**

विष्कम्भः प्रथमयोगः वज्रः पञ्चदशो योगस्तयोस्तिस्रो घटीस्त्यजेत् । गण्डो दशमः अतिगण्डः षष्ठः तयोः षड्घटीस्त्यजेत् । परिघ एकोनविंशो योगस्तस्यार्धं त्यजेत् । शूले नवमे पञ्चघटीः । व्याघाते त्रयोदशे नवघटीराद्यास्त्यजेत् ॥

अथ पक्षरन्ध्राणां परिहारमाह—

**चतुःषडष्टनिध्यर्कभूतातिथ्याद्यनाडिकाः ।**
**अष्टाङ्कमनुतत्त्वाशावाणसंख्या विवर्जयेत् ॥ ३९ ॥**

चतुर्थ्यादीनामष्टादिसंख्या आद्यघटीः क्रमात्त्यजेत् । यथा—चतुर्थ्यामष्टौ घटीः । षष्ठ्यां ९ । अष्टम्यां १४ । नवम्यां २५ । द्वादश्यां १० । चतुर्दश्यां ५ ॥

अथ गण्डान्तदोषमाह द्वाभ्याम्—

**गण्डान्तं त्रिविधं लग्ननक्षत्रतिथिसंभवम् ।**
**एका मीनाजयोः कर्कहर्योर्वृश्चिकधन्विनोः ॥ ४० ॥**
**चतस्रोऽश्विनोः सार्पपित्र्योः शक्रभमूलयोः ।**
**द्वे पूर्णानन्दयोः सन्धौ घट्यः स्युरतिनिन्दिताः ॥ ४१ ॥**

लग्नादिसंभवं त्रिविधं सन्धिरूपं गण्डान्तं भवति । तत्रादौ लग्नगण्डान्तम् । मीनाजयोः सन्धौ एका घटी गण्डान्तम् । मीनस्यान्ते त्रिंशत्पलानि मेषस्यादौ च तावन्ति मिलित्वा एका घटी गण्डान्तसंज्ञः स-

न्धिरित्यर्थः । एवं कर्कसिंहयोः सन्धौ वृश्चिकधन्विनोश्च सन्धौ एकैका घटी गण्डान्तमुच्यते ॥ अथ नक्षत्रगण्डान्तम् । अन्त्यं रेवती तस्यान्ते घटीद्वयं अश्विन्या आदौ घटीद्वयं मिलित्वा अन्त्याश्विनोः सन्धौ चतस्रो घट्यो गण्डान्तम् । एवं सार्पपित्र्योः आश्लेषामघयोः तथा ज्येष्ठामूलयोश्च सन्धौ घट्यः ४ ॥ अथ तिथिगण्डान्तम् । पूर्णाः पञ्चमीदशमीपञ्चदश्यः तासामन्ते एकैका घटी । नन्दा षष्ठ्येकादशीप्रतिपदः । आसामादौ एकैका मिलित्वा द्वेद्वे घट्यौ पूर्णानन्दयोः सन्धौ गण्डान्तम् । एवं त्रिविधगण्डान्तघट्योऽतिनिन्दिताः स्युरित्यर्थः ॥

अथ पूर्वोक्तदुष्टयोगानामपवादमाह—

**सदसद्योगयोर्योगे सद्योगो बलवान्भवेत् ।**
**लग्नशुद्धिरसद्योगनाशिकेत्यपरे जगुः ॥ ४२ ॥**

सद्योगः सिद्धियोगः असद्योगः क्रकचादिः अनयोर्योगे प्राप्तौ सद्योगो बलवान्भवेत् । प्रबलदुर्बलन्यायेन दुर्बलं हत्वा कार्यसिद्धिं जनयेदित्यर्थः । तथा च राजमार्तण्डः—"अयोगः सिद्धियोगश्च द्वावेतौ भवतो यदि । अयोगो हन्यते तत्र सिद्धियोगः प्रवर्तते ॥" अपरे आचार्याः लग्नशुद्धिरसद्योगनाशिकेत्याहुः । उक्तं च मुहूर्तचिन्तामणौ—"परे लग्नशुद्ध्या कुयोगादिनाशम्" इति ॥

**केचित्प्रत्यरिजन्मर्क्षपातवैधृतिभूमिजान् ।**
**प्रोचुरावश्यके कार्ये मध्याह्नात्परतः शुभान् ॥ ४३ ॥**

केचित् राजमार्तण्डादयः प्रत्यरिः पञ्चमतारा । जन्मर्क्षं जन्मतारा । पातो व्यतीपातः । वैधृतिः सप्तविंशो योगः । भूमिजो मङ्गलवारः । एतान् आवश्यके कृत्ये मध्याह्नात्परतः शुभान्प्रोचुः । उक्तं च—"विष्टिरङ्गारकश्चैव व्यतीपातः सवैधृतिः । प्रत्यरिर्जन्मनक्षत्रं मध्याह्नात्परतः शुभम् ॥" इति ॥

अथ संवर्तादिदुष्टयोगपरिहारमाह—

**संवर्तमृत्युक्रकचादिदोषान्न केचिदिन्दौ सबले निनिन्दुः ।**
**विना दिनाद्यप्रहरं च केचित्केचित्प्रयाणं समरं च हित्वा ॥**

'सवर्तं प्रतिपत्सौम्ये ससम्यर्केऽतिनिन्दितौ' इत्युक्त सवर्तं। तथा 'मृत्युयोगो रवौ मित्रम्' इत्याद्युक्तो मृत्यु। 'क्रकच स्याद्वारतिथ्योर्यदि योगे त्रयोदश' इत्युक्त क्रकच। आदिना दग्धादियोगा 'दग्धा विषा' इत्याद्युक्ता। एतान्दोषान् केचिदाचार्या इन्दौ चन्द्रे सबले कर्तुर्गोचरेण समीचीने सति न निनिन्दु। किंतु शुभान् जगुरित्यर्थ॥ तदुक्त मुहूर्तचिन्तामणौ—"मृत्युक्रकचदग्धादीनिन्दौ शस्ते शुभान् जगु" इति। केचित् दिनाद्यप्रहर विना न निनिन्दु। राजमार्तण्ड—"उत्पाते यमघण्टे च काणे च क्रकचे तथा। तिथौ दग्धे च काले च प्राग्यामात्परत शुभम्॥" इति। केचित् प्रयाण यात्रा समर युद्ध च हित्वाऽन्यत्र न निनिन्दु। लल्ल—"वारर्क्षतिथियोगेषु यात्रामेव निवर्जयेत्। विवाहादीनि कुर्वीत गर्गादीनामिद वच॥" इति। अत्र निन्द्येष्विति शेष॥

अथ देशभेदेन परिहारमाह—

**ये भवन्ति तिथिवासरताराऽन्योन्यसङ्गमवशेन कुयोगाः।**
**हूणवङ्गखशनीवृति वर्ज्या नान्यनीवृति तथा प्रथितास्ते॥४५॥**

तिथ्यादीनामन्योन्यसयोगवशेन ये कुयोगा भवन्ति ते सर्वे हूणवङ्गखशेष्वेव देशेषु वर्ज्या। अन्यदेशे नैव ते तथा निन्द्यत्वेन प्रथिता ख्याता। "नीवृज्जनपदो देश" इत्यमर॥ अत्र तिथिवासरसङ्गमजा क्रकचादय। तिथिताराासङ्गमजा 'वैश्वानुराधार्यमा' इत्युक्ता। तारावासरसङ्गमजा 'दग्ध याम्यत्वाष्ट्रविश्व' इत्याद्युक्ता। तिथ्यादित्रयजा 'पञ्चम्या रविहस्त' इत्याद्युक्ता॥

अथ शून्यतिथ्यादीना परिहारमाह—

**मासेषु शून्यास्तिथयश्च यानि**
**शून्यानि लग्नान्युदितानि तिथ्याद्यु।**
**मध्येषु देशेषु विगर्हितानि**
**देशेषु शेषेषु न दोषवन्ति॥ ४६॥**

मासेषु शून्यास्तिथयः । 'चैत्रे गोष्टौ माधवे द्वादशी स्यात्' इत्या-युक्ताः । यानि तिथ्यां शून्यानि लग्नानि 'विषमतिथिषु पक्षादेः क्रमा-त्तौलिनक्रौ' इत्यादीन्युदितानि तानि च मध्येषु देशेषु विगर्हितानि ॥ मध्यदेशप्रमाणं तु—"हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्य-गेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥" इति । इतरदेशेषु न दोषवन्ति ॥

अथ दोषसङ्घापवादभूतान्नवियोगानाह—

विवस्वदृक्षाद्युगतर्कगोदि-
ग्विश्वाङ्गुलीसंख्यमसंख्यदोषान् ।
नक्षत्रमृक्षाधिपतेर्निहन्ति
योगोत्तमोऽयं रवियोगसंज्ञः ॥ ४७ ॥

विवस्वान् सूर्यः स यस्मिन्नक्षत्रेऽस्ति तद्विवस्वदृक्षं तस्मादृक्षाधिपते-श्चन्द्रस्य नक्षत्रं चतुःषण्णवदशत्रयोदशविंशतिसंख्यं चेदयं रवियोगसं-ज्ञको योगश्रेष्ठोऽसंख्यदोषान्निहन्ति ॥ उक्तं च—"सूर्यभाद्वेदगोतर्कदि-ग्विश्वनखसंमिते । चन्द्रर्क्षे रवियोगाः स्युर्दोषसङ्घविनाशकाः ॥" इति ॥

अथ करणानां स्वभावमाह—

सर्वेषु कार्येषु ववादिषट्कं
श्रेष्ठं न विष्टिः करणाधमा यतः ।
किंस्तुघ्ननागाख्यचतुष्पदेषु
न सत्क्रिया स्याच्छकुनिः क्वचिच्छुभः ॥ ४८ ॥

सर्वेषु कार्येषु ववादिषट्कं श्रेष्ठम् । विष्टिः सप्तमं करणम् । सा न श्रेष्ठा यतः करणेष्वधमा । किंस्तुघ्न एकादशं करणं नागो दशमं चतुष्पदं नवमं तेषु सत्क्रिया न स्यात् । शकुनिरष्टमं करणं स क्वचिच्छुभः ॥

अथ विष्टिज्ञानमाह—

अब्ध्यष्टेशतिथित्र्यद्रिदिग्भूताख्ये सितादिके ।
तिथौ विष्टिः परं पूर्वे परं पूर्वं दलं क्रमात् ॥ ४९ ॥

सितादिके शुक्लपक्षादिके अब्धयश्चतुर्थी तदादिके तिथौ क्रमात् परादिकमर्धं विष्टिर्ज्ञेया । यथा—शुक्ले चतुर्थ्यां परं दलं भद्रा । अष्टम्यां पूर्वं दलम् । एकादश्यां परं दलम् । पूर्णिमायां पूर्वं दलम् । कृष्णे तृतीयायां परं दलम् । सप्तम्यां पूर्वम् । दशम्यां परम् । चतुर्दश्यां पूर्वमिति ॥

अथास्याः परिहारमाह द्वाभ्याम्—

**केचित्पूर्वार्धजां रात्रौ दिवसे तूत्तरार्धजाम् ।**
**मध्याह्नादूर्ध्वमपरे ग्राह्यां पूर्वार्धजां जगुः ॥ ५० ॥**

केचिदाचार्याः तिथेः पूर्वार्धजां रात्रौ ग्राह्यां जगुः । तिथेरुत्तरार्धजां तु दिवसे ग्राह्यां जगुः । यथा—चतुर्थ्यां दिवा ग्राह्या रात्रौ निषिद्धा । अष्टम्यां तु दिवा निषिद्धा रात्रौ चेद्ग्राह्येति । अपरे त्वाचार्याः मध्याह्नादूर्ध्वं तिथेः पूर्वार्धजामपि ग्राह्यां जगुः । उक्तं च—"दिनार्धोत्तरं विष्टिपूर्वं च शस्तम्" इति ॥

**सिंहघटान्त्यकुलीरे चन्द्रे भद्रेहलोकगा त्याज्या ।**
**स्वर्गेऽजगोऽलिमिथुने पातालेऽन्यत्र तत्फलं तत्र ॥ ५१ ॥**

सिंहकुम्भमीनकर्कस्थे चन्द्रे सति भद्रा इह लोकगा मनुष्यलोके विद्यमाना सा त्याज्या । मेषवृषभवृश्चिकमिथुनस्थे चन्द्रे भद्रा स्वर्गे विद्यते । अन्यत्र कन्यातुलाधनुर्मकरस्थे चन्द्रे भद्रा पाताले विद्यतेऽतस्तत्फलं तत्र स्वर्गपातालयोरेव ॥

अथ भद्रायां विहितकर्मसु वसिष्ठवचनं पठति—

**वधबन्धविषाग्न्यस्त्रछेदनोच्चाटनादि यत् ।**
**तुरङ्गमहिषोष्ट्रादि कर्म विष्ट्यां च सिद्ध्यति ॥ ५२ ॥**

अत्र प्रथम आदिशब्दो जारणादिग्रहणार्थम् । द्वितीयो गजादिग्रहणार्थम् ॥

अथ चतुर्थ्यादितिथिषु भद्राया मुखपुच्छविभागमाह—

एकद्विरामकृतवेदगुणद्विभूमि-
पादादिपञ्चघटिका न सदास्यमस्याः ।
वेदेन्दुदस्रगुणरामयमेन्दुवेद-
पादान्तिमत्रिघटिकाः शुभकारि पुच्छम् ॥ ५३ ॥

पूर्वोक्तशुक्लचतुर्थ्यादितिथिषु विद्यमानाया अस्याः भद्राया एकद्विरामादिसंख्येषु पादेषु तुरीयांशेषु आदिभूताः पञ्च घटिका आस्यं मुखम् । तत्र सत् शुभं न भवति । यथा—चतुर्थ्यां भद्रायाः प्रथमपादस्य प्रथमं घटीपञ्चकं मुखम् । एवमष्टम्यां भद्राया द्वितीयचरणस्य घटीपञ्चकं मुखम् । एकादश्यां तृतीयचरणस्य । पूर्णिमायां चतुर्थपादस्य । तृतीयायां च चतुर्थस्य । सप्तम्यां तृतीयस्य । दशम्यां द्वितीयस्य । चतुर्दश्यां प्रथमपादस्य ॥ अथ पुच्छमाह—वेदेति । चतुर्थ्यादिभद्रायाश्चतुर्थादिपादानां अन्तिमं घटीत्रयं पुच्छम् । तच्छुभकारि ज्ञेयम् ॥ यथा—चतुर्थ्यां भद्रायाश्चतुर्थचरणस्य अन्त्यं घटीत्रयं पुच्छम् । एवमष्टम्यां प्रथमस्य । एकादश्यां द्वितीयस्य । पूर्णिमायां तृतीयस्य । तृतीयायां तृतीयस्य । सप्तम्यां द्वितीयस्य । दशम्यां प्रथमस्य । चतुर्दश्यां चतुर्थस्य ॥

अथ त्याज्यान्तराण्याह—

खलेन्दुयुक्तांशतनू खलांशं
मध्ये निशाह्नोः पलविंशतिं च ।
उत्पाततः सप्त दिनानि जह्या-
त्षण्मासमौत्पातिकयौद्धभाद्यम् ॥ ५४ ॥

खलाः क्षीणेन्दुरविभौमशनैश्चराः तत्र खलेन खलाभ्यां खलैर्वा इन्दुश्चन्द्रस्तेन या युक्ते अंशतनू अंशो नवांशः तनुर्लग्नं ते उभे जह्यात् त्यजेत् । सर्वत्र शुभकार्ये इति शेषः । तथा खलांशं खलस्वामिकं नवांशं जह्यात् । निशाह्नोर्मध्ये पलविंशतिं निशार्धे दिनार्धे च विंशति-

पलानि जह्यात् । उत्पातेतः भूकम्पादय उत्पातास्ते यस्मिन्दिने भवन्ति ततः सप्तदिनानि त्यजेत् । यस्मिन्दिननक्षत्रे उत्पाताः संभूतास्तदौत्पातिकभम् । यस्मिन्नक्षत्रे ग्रहयोर्युद्धं जातं तद्यौद्धभम् । आद्यशब्दाद्ग्रहैर्भेदितं च भं षण्मासं जह्यात् । ग्रहभेदो युद्धं च ग्रहगणिते प्रसिद्धम् ॥

अथ लग्नानां बाधिर्यादिदोषान् तत्फलं तत्परिहारं चाह त्रिभिः—

**वधिरावह्नि तुलाली निशि मृगधनुषी दिनेऽजसिंहवृषाः ।**
**अन्धा रात्रौ कन्यामिथुनकुलीरा विलग्नानि ॥ ५५ ॥**

अह्नि दिवा तुलावृश्चिकौ बधिरौ । निशि रात्रौ मकरधनुषी लग्ने वधिरे । दिवा मेषसिंहवृषभा अन्धाः । रात्रौ कन्यामिथुनकर्काः अन्धाः ॥

**पङ्गुर्घटोऽह्नि मीनो रात्रौ वधिरेषु निःस्वतान्धेषु ।**
**वैधव्यं धननाशः पङ्गौ स्वामीज्यदृष्टितः शुभकृत् ॥ ५६ ॥**

अह्नि दिने घटः कुम्भः पङ्गुसंज्ञः । रात्रौ मीनः पङ्गुः । अथैषां फलम् । बधिरेषु लग्नेषु विवाहादौ शुभे निःस्वता दारिद्र्यम् । अन्धलग्नेषु वैधव्यम् । पङ्गुलग्ने धननाशः । अथैषां परिहारः—स्वामिनो लग्नाधिपाः शुक्रादयः ईज्यो गुरुः एषां दृष्टया बधिरादिलग्न शुभकृद्भवति॥

अथैषां शून्यराशीनां च देशभेदेन परिहारमाह—

**पङ्ग्वन्धवधिरं लग्नं मासशून्याश्च राशयः ।**
**गौडमालवदेशेषु वर्ज्या नान्यत्र कुत्रचित् ॥ ५७ ॥**

मासशून्या राशयो 'घटझषवृषयुग्माः' इत्युक्ताः ॥

अथ नाडीनक्षत्राण्याह द्वाभ्याम्—

**जन्माद्यं दशमं कर्म सङ्घातं षोडशं नृणाम् ।**
**अष्टादशं सामुदायं त्रयोविंशं विनाशकम् ॥ ५८ ॥**
**मानसं पञ्चविंशं षट् नाड्यृक्षाण्यथ भूभुजाम् ।**
**देशजात्यभिषेकैश्च नवात्रासद्युतं न सत् ॥ ५९ ॥**

---

१ शुक्रादय इत्युक्तिः तुलालीति क्रममनुसरति ।

यस्मिन्नक्षत्रे जन्माभूत्तज्जन्माख्यं आद्यं नक्षत्रं तस्माद्दशमं भं कर्मसंज्ञम्। जन्मनक्षत्रात्षोडशं साङ्घातिकम्। एवमष्टादशं सामुदायम्। त्रयोविंशं विनाशकम्। पञ्चविंशं मानसमिति षट् नृणां सर्वमनुष्याणां नाड्युडूनि नाडीभानि कथितानि। एतान्येव देशजात्यभिषेकनक्षत्रैः नवसंख्याकानि भूभुजां राज्ञां नाडीभानि स्युः॥ अत्र देशो वाराणस्यादिस्तन्नक्षत्रं शतपदचक्रोक्तम्। यथा—वाराणस्या रोहिणी। कुरुक्षेत्रस्यार्द्रेति॥ जातिनक्षत्राणि तु वराहसंहितायाम्—"पूर्वात्रयं सानलमग्रजानां राज्ञां च पुष्येण सहोत्तराणि। सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम्॥ आदित्यहस्ताभिजिदाश्विनानि वणिग्जनस्वाम्यमुपागतानि। मूलत्रिनेत्रानिलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाः॥ सौम्येन्द्रचित्रावसुदैवतानि सेनाजनस्वाम्यमुपागतानि। सार्पं विशाखा श्रवणो भरण्यश्चाण्डालजातेरभिनिर्दिशन्ति॥" इति। यस्मिन्पुष्यादौ नक्षत्रे राजाभिषेको जातस्तदभिषेकनक्षत्रं प्रसिद्धम्। अत्र नाडीनक्षत्रमध्ये यदसद्युतं पापग्रहान्वितं तदसत्। फलविशेषस्तु जातकग्रन्थे द्रष्टव्यः॥

अथ विषघटीराह त्रिभिः—

विषघट्योऽश्विभादीनां चतस्रो घटिकोचयात्।
खेषोर्जिनाररवाग्निखाब्ध्योरब्धिचन्द्रात्कुदस्ततः॥ ६०॥
खरामाक्षखतो दंतात्खाग्नितः कृतितो धृतेः॥
कृष्णः कृतेर्मनोरिन्द्रादिग्भ्यः शक्राद्रसेषुतः॥ ६१॥
जिनाद्यखादिशः खेन्दोर्धृतेर्भूपाज्जिनात्पराः।
खरामाच्च भभोगघ्नाः रषष्टाः स्युः खरसोद्धृताः॥ ६२॥

अश्विन्यादीना खेषोरित्याद्युक्तात् घटिकोचयात्परायतस्रो विषघट्यः स्युः। यथा—अश्विन्याः खेषोः पञ्चाशद्घटिकोत्तरं चतस्रो घटिका विषम्। एवं भरण्या जिनात् चतुर्विंशतिघटिकोत्तरम्। एवं कृत्तिकादिनक्षत्राणां क्रमेण ३०। ४०। १४। २१। ३०। २०। ३२।

३० । २० । १८ । २१ । २० । १४ । १४ । १० । १४ ।
५६ । २४ । २० । १० । १० । १८ । १६ । २४ । ३० ।
तदेवं षष्टिघटिकात्मके नक्षत्रभोगे ध्रुवका विषघट्यश्चोक्ताः । न्यूनाधिकत्वे तु स्पष्टीकरणमाह—खेषोरित्यादिनोक्ता ध्रुवघटिका विषघटिकाश्च भभोगघ्ना इष्टनक्षत्रभोगेन गुणिताः खरसोद्धृता. षष्ट्या भाजिताः स्पष्टाः स्युः । यथा—अश्विनीध्रुवघट्यः ५० इष्टाश्विनीभोगेन ६३ गुणिताः ३१५० खरसोद्धृताः ५२।३० जाताः स्पष्टाः । अतः परा विषघट्यः ४ इष्टाश्विनीभोगेन ६३ गुणिताः २५२ खरसोद्धृता. स्पष्टा ४ । १२ ॥ परिहारमाह गुरुः—"चन्द्रो विषघटीदोष हन्ति केन्द्रत्रिकोणगः । लग्न विना शुभैर्दृष्ट केन्द्र वा लग्नपस्तथा ॥" इति ॥

अथ ग्रहणनक्षत्रस्य निन्द्यत्वे ग्रासभेदेनावधिमाह—

सर्वग्रासे तु षण्मासमर्धग्रासे त्रिमासकम् ।
अङ्घ्रिग्रासे मासमेकं ग्रहणर्क्षं विवर्जयेत् ॥ ६३ ॥

स्पष्टम् ॥

अथ ग्रहणत. पूर्वापरवर्ज्यकालमाह—

ग्रस्तोदये परं वर्ज्यं ग्रस्तास्ते प्राग्दिनत्रयम् ।
प्राक्पश्चात्सप्त सर्वस्मिन् ग्रस्तेऽर्धेऽर्धव्यवस्थया ॥ ६४ ॥

सूर्यस्य चन्द्रस्य वा ग्रस्तोदये सति पर दिनत्रय वर्ज्यम् । ग्रस्तास्ते सति प्राग्दिनत्रयं वर्ज्यम् । सर्वस्मिन्ग्रस्ते प्राक् सप्त पश्चाच सप्त दिनानि वर्ज्यानि । गुरुः—"ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा । खण्डग्रासे त्रित्रिदिन निःशेषे सप्त सप्त च॥" इति ॥ हेमाद्रौ तु—"त्रयोदश्यादितो वर्ज्यं दिनाना नवक ध्रुवम् । माङ्गल्येषु च सर्वेषु ग्रहणे चन्द्रसूर्ययोः॥" इति ॥ इद पूर्णग्रास एव "खण्डग्रासे त्र्यह तयो." इति तत्रैवोक्तेः । अथार्धे ग्रस्ते अर्धव्यवस्थया प्राक्पश्चाच दिनानि वर्ज्यानि । यथाहाङ्गिराः—"सर्वग्रासेऽपि सप्ताहमर्धग्रासे दिनत्रयम् । त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेक विवर्जयेत्॥" वसिष्ठस्तु—"षड् दिनानि

त्रिभागोने अर्धमासे चतुर्दिनम् । चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चन्द्रसूर्ययोः ॥" इत्याह । अयं निषेधो नित्यनैमित्तिककृत्यातिरिक्तविषयः । गुरुः—"नित्ये नैमित्तिके कार्ये जपहोमक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥" इति ॥

अथ कार्यस्यावश्यकत्वे परिहारमाह—

**वसिष्ठः पञ्च गर्गस्त्रीण्यहान्येकं तु कौशिकः ।**
**मुहूर्तान्पञ्च यवनस्त्यजेदावश्यके जगौ ॥ ६५ ॥**

आवश्यके कृत्ये एवं त्यजेदिति जगौ प्रोवाच । ज्योतिर्निबन्धेऽपि—"पञ्च दिनानि वसिष्ठस्त्रिदिनानि गर्गश्च कौशिकस्त्वेकम् । यवनाचार्यमते तु पञ्चमुहूर्तानि दूषयति राहुः ॥" इति ॥

अथ कालहोरार्थं वारप्रवृत्तिं वक्ष्यन् तावद्दिनमानार्थं चरसाधनमाह सप्तभिः—

**विक्रमस्य शकः पञ्चत्र्येकोनः शालिवाहनः ।**
**स च वेदाब्ध्यब्धिहीनः षष्टिभक्तोऽयनांशकाः ॥६६॥**

विक्रमस्य शकः पञ्चत्र्येकोनः पञ्चत्रिंशदधिकशतेन हीनः शालिवाहनशको भवति ॥ यथा—विक्रमशकः १८४० पञ्चत्र्येकोनः १७०५ शालिवाहनशकः ॥ अथायनांशानाह—स च शालिवाहनशकः वेदाब्ध्यब्धिभिः चतुश्चत्वारिंशदधिकचतुःशत्या हीनः षष्टिभक्तः अयनांशाः स्युः ॥ यथा—शकः १७०९ वेदाब्ध्यब्धिभिः ४४४ हीनः १२६१ षष्टिभक्तः २१।१ एते अयनांशाः स्युः ॥ एतदुपयोगस्तु—"अयनांशाः प्रदातव्या लग्ने क्रान्तौ चरागमे । त्रित्रिभे सत्रिभे याते तथा दृक्कर्मपातयोः ॥" इति ॥

अथ गोलसंज्ञां समरात्रिदिवकालं चाह—

**मेषात्षट्के सौम्यगोलो याम्यगोलो घटाद्रवौ ।**
**अर्वाक् तुल्यमहोरात्रं तत्रायनमितैर्दिनैः ॥ ६७ ॥**

मेषात् षट्के रवौ मेषादिराशिषट्कस्थिते सूर्ये सौम्यगोलः । घटात्

पट्के रवौ तुलादिराशिषट्कस्थे सूर्ये दक्षिणगोलः। तत्र मेषसङ्क्रमे तुला-सङ्क्रमे वा अयनमितैर्दिनैः अयनांशपरिमितैर्वासरैः पूर्वमहोरात्रं तुल्यम्। अहश्च रात्रिश्च त्रिंशद्घटिकात्मिकेत्यर्थः॥

अथ पलभाज्ञानं चरखण्डसाधनं चाह—

**अयनांशमितैर्दिनैर्दिनार्धे**
**विषुवात्प्राङ्नरभाऽक्षभा प्रदिष्टा।**
**दशनागदशाहता त्रिसंस्था**
**चरखण्डानि गुणोद्धृतान्तिमा स्युः॥ ६८॥**

विषुवात् प्राक् मेषसङ्क्रमात् पूर्वं अयनांशमितैर्दिनैरुपलक्षिते काले दिनार्धे मध्याह्नसमये या नरभा द्वादशाङ्गुलमितशङ्कुछाया साऽक्षभा प्रदिष्टा पलभा कथिता। तदुक्तं ग्रहलाघवे—"मेषादिगे सायनभाग-सूर्ये दिनार्धजा भा पलभा भवेत्सा" इति। सा पलभा त्रिसंस्था स्थानत्रये स्थाप्या क्रमेण दशभिः १० नागैः ८ दशभिः १० आहता गुणिता कार्या। तत्रान्तिमा गुणैस्त्रिभिरुद्धृता भक्ताः त्रीणि चरखण्डानि स्युः। यथा—अस्मदेशे पलभा ३। ३० चरखण्डानि ३९। २८। १२ जातानि॥

अथ सूर्यस्य स्पष्टगतिमाह—

**मेषादिषु स्थितवतोऽष्टशरा नगाक्षाः**
**सप्तेषवो नगशरा गजपश्च गोक्षाः।**
**षष्टिः कुपद् शशिरसाः कुरसाश्च षष्टि-**
**गोक्षाः स्फुटा गतिरिनस्य कलास्वरूपा॥ ६९॥**

मेषादिषु स्थितवतः इनस्य सूर्यस्य कलास्वरूपा लिप्तात्मिका स्फुटा गतिरियम्। यथा—मेषेऽर्के अष्टशराः ५८ वृषेऽर्के नगाक्षाः ५७ एवं मिथुनादिषु ५७। ५७। ५८। ५९। ६०। ६१। ६१। ६१। ६०। ५९।

*अथ सूर्यस्य तात्कालिकीकरणमाह—*

**सङ्क्रमभुक्तदिनाद्याद्रविगतिनिघ्नात्खषड्भक्तात् ।**
**लब्धांशकादियुक्तं रविभुक्तर्क्षं रविः स्पष्टः ॥ ७० ॥**

सङ्क्रमभुक्तदिनाद्यात् पञ्चाङ्गे यद्दिने यावतीषु घटिषु पलेषु च सङ्क्रान्तिस्तत आरभ्य स्वाभीष्टदिनपर्यन्तं यावन्ति दिनघटीपलानि भवन्ति तत्सङ्क्रमभुक्तदिनाद्यं तस्मात् । रविगतिनिघ्नात् इष्टराशिस्थितेऽर्के तस्य या स्पष्टा गतिस्तया गुणितात् । अथ षष्ठ्या भक्तात् यल्लब्धं तेंऽशा यदवशिष्टं तत्कलादिकमादिशब्दवाच्यम् । तेन युक्तं रविभुक्तर्क्षं सूर्यस्य भुक्तराशिस्तदा रविः स्पष्टो भवति । यथा—शके १७०९ वैशाख पूर्णिमा शुक्रवारे प्रातः स्वाभीष्टदिनम् । वैशाखशुक्लदशम्यां रवौ घट्यः १९।२३ *तदानीं वृषसङ्क्रान्तिः तामारभ्याभीष्टदिनपर्यन्त सङ्क्रमभुक्त-*दिनाद्य ४ । ४४ । २७ रविगत्या ५७ निघ्नं २७० । १३ । ३९ खषड्भक्तं अस्माल्लब्धेन अंशकादिना ४ । ३० । १३ युक्तं रविभुक्तर्क्षं १ जातः स्पष्टो रविः—१ । ४ । ३० । १३ । राश्यादिः ॥

*अथ भुजज्ञानमाह—*

**भुजस्त्रिभाल्पं त्र्यधिकं षड्भाच्छोध्यं ततोऽधिकम् ।**
**षड्भेनोनं द्वादशभाच्छोध्यं यन्नवभाधिकम् ॥ ७१ ॥**

त्रिभाल्पं राशित्रयादल्पं यद्ग्रहादिकं स एव भुजः । त्र्यधिकं राशित्रयादधिकं चेत् षड्भात्राशिषट्काच्छोध्यम् । राशिषट्कं तेन रहितं कार्यमित्यर्थः । ततोऽधिकं राशिषट्कादधिकं चेत् षड्भेन ऊनं कार्यम् । राशिषट्केन रहितं कार्यमित्यर्थः । यदि नवभाधिकं राशिनवकादधिकं तर्हि द्वादशराशिभ्यः शोध्यं भुजो भवति ॥

*अथ चरं साधयति—*

*सायनरविभुजगृहमितचरदलयोगोऽवशिष्टचरदलतः ।*
*लवगुणितात्त्रयाप्तिहृताल्लब्धयुतश्चरपलानि स्युः ॥ ७२ ॥*

अयनांशयुक्तो यो रविस्तस्य भुजः तस्य गृहाणि राशयस्तन्मितानां चरखण्डानां योगः कार्यः। कथंभूतः राशिभ्योऽधो वर्तमाना लवा अंशास्तैर्गुणितात् अवशिष्टचरखण्डात् त्रिंशद्भक्ताद्यल्लब्धं फलं तेन युतोऽसौ चरपलानि स्युः॥ यथा—रविः १। ४। ३०। १३ सायनः १। २९। ३१। १३ अस्य भुजः १। २९। ३१। १३ राशिमितचरदलयोगः ३९ अवशिष्टं चरदलं २८ लवादिभिः २९। ३१। १३ गुणितं ७१४। ३४। १२ खाग्निहृतं असाल्लब्धेन २३ चरदलयोगो ३९ युक्तः ९८ जातानि चरपलानि॥

अथ चरसंस्कृतं दिनमानमाह—

**द्विघ्नैस्तैर्घटिकास्त्रिंशद्गोलयोः सौम्ययाम्ययोः।**
**युतोना दिनमानं तद्रात्रिमानं खषड्च्युतम्॥ ७३॥**

तैश्चरपलैर्द्विघ्नैर्द्विगुणितैस्त्रिंशद्घटिकाः सौम्यगोलस्थे सायनसूर्ये युताः दक्षिणगोलस्थे ऊनाः कार्या दिनमानं भवति॥ अथ रात्रिमानमाह— तद्दिनमानं खषड्भ्यः ६० च्युतं शुद्धं रात्रिमानं भवति॥ यथा— त्रिंशद्घटयः द्विघ्नैश्चरपलैः ११६ सायनस्योत्तरगोलस्थत्वाद्युताः ३१। ५६ जातं दिनमानम्। एतत्खषड्च्युतं २८। ४ जातं रात्रिमानम्॥

अथ वारप्रवृत्तिमाह द्वाभ्याम्—

**प्राक्पश्चाद्देशरेखान्तर्योजनैश्चरणच्युतैः।**
**पलैर्हीनाधिकाः पञ्चदश नाड्यो दिनार्धतः॥ ७४॥**
**ऊनाधिकास्ताद्विवरैरूर्ध्वं पूर्वमिनोदयात्।**
**वारप्रवृत्तिर्होरार्धमन्यत्रार्धोदयाद्रवेः॥ ७५॥**

लङ्कात आरम्य मेरुशिरसि दत्तसूत्राधोवर्तिदेशा रेखाशब्देनोच्यन्ते। ते च देशाः—"पुरी रक्षसां देवकन्याथ काञ्ची सितः पर्वतः पर्यली वत्सगुल्मम्" इत्यादयः प्रसिद्धाः। यस्मिन्देशे वारप्रवृत्तिरपेक्षिता स देशो रेखातः प्राग्वा पश्चाद्वा तज्ज्ञातव्यम्। ततो देशरेख-

योरन्तर्वर्तियोजनानि यावन्ति भवन्ति तानि पलात्मकानि । तैः पलैश्चरणच्युतैः स्वचतुर्थांशहीनैः पञ्चदश नाड्यो हीनाधिकाः कार्याः । यदा रेखातः प्राक् स्वदेशस्तदा हीनाः यदा पश्चात्तदाऽधिकाः कार्याः । अथ यद्दिने वारप्रवृत्तिरिष्टा तद्दिने यद्दिनार्धं तस्मात् पलैः संस्कृताः पञ्चदश ऊनाधिकाश्चेद्भवन्ति तदा तद्विवरैः दिनार्धस्य संस्कृतपञ्चदशानां च विपरीतपत्नैः पलैरिनोदयादूर्ध्वं पूर्वं वा वारप्रवृत्तिः । संस्कृताः पञ्चदश चेद्दिनार्धतो न्यूनास्तदा सूर्योदयादूर्ध्वम् । अधिकाश्चेत्पूर्वम् । वारप्रवृत्तिरित्यर्थः ॥ यथास्मद्देशे रेखातः पश्चाद्योजनानि ३२ चरणेन चतुर्थांशेन हीनानि २४ पश्चाद्योजनत्वादेतैः पलैर्युताः पञ्चदश घटिकाः १९ । २४ दिनार्धं १९ । १८ अस्मान्न्यूना इति विवरम् ० । २४ एभिः पलैः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदि दिनार्धं १४ । ७ तदाऽस्मादधिका इति विवरं १ । १७ एताभिर्घटीभिः सूर्योदयात्प्राग्वारप्रवृत्तिरित्यर्थः । अथ ऊर्ध्वमिति पाठस्तु चिन्त्यः । इयं वारप्रवृत्तिर्होरार्थमेव । अन्यस्मिन्कार्ये तु रवेरर्धोदयाद्वारप्रवृत्तिः ॥

अथ कालहोरामाह—

> वारप्रवृत्तेर्द्विगुणेष्टघट्यः
> स्वपञ्चहृच्छेषघटीवियुक्ताः ।
> तष्टा नगैरेकयुता मुहूर्ता
> वारात्परेषामपि कालहोरा ॥ ७६ ॥

यस्मिन्क्षणे वारप्रवृत्तिर्जाता तत इष्टघट्यो द्विगुणाः कार्याः ताः स्थानत्रये स्थाप्याः एकत्र पञ्चभिर्भक्ते यल्लब्धं तत्त्याज्यं यच्छेषं तदितरत्र द्विगुणघटीमध्ये वर्जितं कार्यम् । ता एवंविधा घट्य एकयुताः सप्तभिस्तष्टाः कार्याः अवशिष्टाः वारस्य वारात्परेषामपि क्रमेण कालहोरारूपा मुहूर्ताः स्युः ॥ यथा—शुक्रवारे इष्टघटिकाः ६ द्विगुणाः १२ स्वपञ्चहृच्छेषघटीभिः २ वियुक्ताः १० सैकाः ११ नगैस्तष्टाः ४ शुक्रवारादृगणनया चतुर्थः सोमस्तस्य होरा प्राप्ता । फलितार्थस्त्वेवम् ।

एकैका होरा सार्धघटीद्वयात्मिका । तदधिपानां क्रमस्तु—"अर्कः शुक्रो बुधश्चन्द्रो मन्दो जीवो धरासुतः" । एवंरूपः । यस्मिन्वारे होराऽपेक्षिता तद्वारस्य प्रथमा होरा भवति । तत उक्तक्रमेण होरेशाः स्युरिति । यथा—शुक्रवारे पूर्वं शुक्रस्य २ । ३० ततो बुधस्य २ । ३० ततः सोमस्येति ॥

अथ कालहोराप्रयोजनमाह—

**वारोक्तं कालहोरायां कार्यमावश्यकेऽथवा ।**
**वारांशगेऽर्के चन्द्रे वा भोक्तं भेशमुहूर्तके ॥ ७७ ॥**

यस्मिन्वारे यत्कर्म प्रोक्तं तस्य वारस्यालाभे कर्मण आवश्यकत्वे च तत्कर्म तस्य वारस्य कालहोरायां कर्तव्यम् । अथवा तस्य वारस्य नवांशे सूर्ये चन्द्रे वा स्थिते तत्कर्म कार्यम् । उक्तं च—"यद्ग्रहस्य दिने कर्म यत्किंचिदभिधीयते । तस्यांशसंस्थिते चन्द्रे सूर्ये वा तद्विधीयते" इति । अथ भोक्तं भे नक्षत्रे यद्वस्त्रपरिधानादिकं कर्मोक्तं तस्यावश्यकत्वे तत्कर्म भेशमुहूर्तके तन्नक्षत्रस्वामिनो मुहूर्ते कार्यम् । नारदः—"यस्मिन्भे च यत्कर्म निखिलं कथितं च यत् । तद्दैवत्ये तन्मुहूर्ते कार्यं यात्रादिकं तथा ॥" इति ॥

अथ मुहूर्तस्वामिन आह—

**रुद्राहिमित्रपितृवसुसलिलं विश्वे विधिर्विधातेन्द्रः ।**
**इन्द्राग्नी निर्ऋतिकपार्यमभगसंज्ञा दिवा मुहूर्ताः स्युः ॥ ७८ ॥**

दिवा दिवसे रुद्रादिसंज्ञकाः क्रमेण पञ्चदश मुहूर्ताः स्युः । तत्राहिः सर्पः । विधिरभिजिद्दैवतम् । इन्द्राग्नी एकादशस्य मुहूर्तस्य दैवतम् । कपोवरुणः ।

अथ रात्रिमुहूर्तानाह—

**शिवाऽजपादहिर्बुध्न्यपूषाश्व्यन्तकवह्निकाः ।**
**चन्द्रादितीज्यविष्ण्वर्कत्वष्ट्रवाताः क्षणा अपि ॥ ७९ ॥**

निशि शिवाद्यः पञ्चदश क्रमेण क्षणा मुहूर्ताः स्युः । अश्विनी पञ्चममुहूर्तस्य । को ब्रह्माऽष्टमस्य ॥

अथ दुर्मुहूर्तानाह—

**अर्यमा ब्रह्मनिर्ऋती पित्र्याँ रवितोऽभिजित् ।**
**रक्षो जले पितृब्राह्मे शिवाही गर्हिताः क्षणाः ॥ ८० ॥**

रवितः रविवारादिषु क्रमेण द्वादश एते मुहूर्ता गर्हिता. ॥ यथा— रवावर्यमा चतुर्दशो मुहूर्तः । सोमे ब्रह्मनिर्ऋती गर्हितौ । भौमे पित्र्याँ । बुधेऽभिजित् । गुरौ रक्षोजले । भृगौ पितृब्राह्मे । शनौ शिवसर्पौ निषिद्धौ ॥

अथ रविवारादिषु तत्र तत्र प्रागुक्तान् कुलिकार्धयामयमघण्टादिदुर्मुहूर्तान् पुनर्लाघवार्थं संगृह्णाति पुष्पिताग्राद्वयेन—

**तपने मनुसप्तदिग्रसाष्टाबुडुपे मन्विनविश्वषण्णवाष्टौ ।**
**क्षितिजे द्विचतुस्त्रिषड्दश स्युर्विदि दिग्वेदयमाष्टमाङ्कशक्राः ८१**
**धिषणे द्विषडर्कभूपतिथ्यो भृगुजेऽब्धीषुरसाङ्कमन्विनाशाः ।**
**रविजे कुयमाष्टदिग्भवार्का इति वर्ज्या दिवसस्य षोडशांशाः॥**

तपने रविवारे चतुर्दशसप्तमदशमषष्ठाष्टमा मुहूर्ता वर्ज्याः । एवमुडुपे सोमवारे १४ । १२ । १३ । ६ । ९ । ८ क्षितिजे भौमवारे २ । ४ । ३ । ६ । १० विदि बुधवारे १० । ४ । २ । ८ । ९ । १४ धिषणे गुरुवारे २ । ६ । १२ । १६ । १९ भृगुजे शुक्रे ४ । ५ । ६ । ९ । १४ । १२ । १० रविजे शनौ १ । २ । ८ । १० । ११ । १२ एषु मुहूर्तेषु कश्चिद्दुर्मुहूर्तः कश्चित्कुलिकः कश्चिदर्धयामः कश्चिद्यमघण्टो वर्तते । अतस्ते सर्वे त्याज्या भवन्ति । अत्र मुहूर्तप्रमाणं तु दिनमानस्य षोडशांशः ॥

अथ रविवारादिषु नक्षत्रविशेषैः सिद्धियोगानाह द्वाभ्याम्—

**मूलाश्वार्कोत्तरापुष्यं पुष्यब्राह्मेन्द्रनुश्रुति ।**
**हयाश्लेषाग्न्यहिर्बुध्न्यं हस्तेन्द्वग्न्यनुरोहिणि ॥ ८३ ॥**
**पुष्यादित्यान्त्याश्विमित्रं मित्रान्त्याश्व्यदितिश्रवः ।**
**श्रवः स्वातिकभं सिद्ध्यै रविवारादिषु क्रमात् ॥ ८४ ॥**

रविवारादिषु क्रमात् पदशः प्रोक्तानि नक्षत्राणि सिद्ध्यै भवन्ति । सर्वार्थसिद्धिकराणि स्युरित्यर्थः । यथा—रवौ मूलाश्विनी हस्तोत्तरात्रयपुष्याः । सोमवारे पुष्यरोहिणीमृगानुराधाश्रवणाः । भौमेऽश्विन्याश्लेषाकृत्तिकोत्तराभाद्राः । बुधे हस्तमृगकृत्तिकानुराधारोहिण्यः । गुरौ पुष्यपुनर्वसुरेवत्यश्विन्यनुराधाः शुक्रेऽनुराधारेवत्यश्विनीपुनर्वसुश्रवणाः । शनौ श्रवणस्वातीरोहिण्य इति ॥

अथ कुलिकयमघण्टयोरपवादमाह—

**मध्ये विन्ध्यहिमाद्र्योरान्ध्रे मगधे च यमघण्टः ।**
**काश्मीरेषु च कुलिकस्त्याज्यः सर्वत्र चार्धयामाख्यः॥८५**

यमघण्टः 'सूर्यादिषु दिगद्याङ्का' इत्युक्तो विन्ध्यहिमाचलयोर्मध्यदेशे आन्ध्रे मगधे च त्याज्यः । कुलिकः 'कुलिका मनुसूर्याशा' इत्युक्तः काश्मीरेषु वर्ज्यः । अर्धयामस्तु सर्वत्र ॥

अथ भृगोर्बाल्यवार्धकदिनसंख्यामाह—

**बालस्त्रीण्युदितः प्राच्यां प्रतीच्यां दश भार्गवः ।**
**दिनानि वृद्धोऽस्तादर्वाक् पक्षं पञ्चदिनं त्यजेत् ॥ ८६ ॥**

प्राच्यामुदितो भार्गवस्त्रीणि दिनानि बालः । प्रतीच्यामुदितस्तु दश दिनानि । अथ प्राच्यामस्तात् पूर्वं पञ्चदशदिनानि वृद्धः । प्रतीच्यामस्तादर्वाक् पञ्चदिनं वृद्धः ॥

---

१ नामैकदेशेन नामग्रहणसंप्रदायादन्विति पदेनानुराधाग्रहणम् ।

अथ गुरोर्बाल्यवार्धके मतान्तरं चाह—

**गुरुर्बालश्च वृद्धश्च पक्षं केचिच्चसम्पदि ।**
**उभयत्रोभयोस्त्याज्यं दशपञ्चत्र्यहं जगुः ॥ ८७ ॥**

गुरुः पक्षं पञ्चदशदिनानि बालो वृद्धश्च । अथ केचिदसम्पदि असम्भवे सति गुरुशुक्रयोः उभयत्र बाल्ये वार्धके च दिङ्नियमं त्यक्त्वा दश दिनानि त्र्यहं वा त्याज्यं जगुः । लग्नान्तराभावे सति अतिकालस्य वटोरवश्यदेयायाः कन्याया वा यथा दशपञ्चत्रिदिनानि वर्ज्यानि मान्यथेत्यर्थः ॥

अथ चन्द्रस्य बाल्यवार्धके आह—

**वृद्धोऽस्तात्प्राक् त्र्यहं बालस्त्वेकाहमुदयोत्तरम् ।**
**चन्द्रस्त्याज्यः कैश्चिदुक्तश्चन्द्रो बालः शुभंकरः ॥ ८८ ॥**

चन्द्रोऽस्तात्प्राक् दिनत्रयं वृद्धः । उदयादुत्तरमेकदिनं बालस्त्याज्यः । कैश्चित्तु बालश्चन्द्रः शुभंकर उक्तः ॥ यथाह कश्यपः—"वृद्धश्चन्द्रस्त्रियं हन्ति पतिं हन्त्यस्तमागतः । यतस्त्वमृतरश्मित्वाद्बालोऽपि शुभदः शशी ॥" इति ॥

अथ गुरुभार्गवास्तादिषु वर्ज्यकर्माण्याह द्वाभ्याम्—

**यात्रासमावर्तनकर्णवेधचौलव्रतोद्वाहवधूप्रवेशाः ।**
**जलाशयाऽऽरामनृपाभिषेकदेवप्रतिष्ठाग्निपरिग्रहाश्च ॥ ८९ ॥**
**दिव्यप्रपातीर्थगृहाऽतिपन्नसंस्कारदीक्षाक्षितिपेक्षणानि ।**
**विद्याव्रतोत्सर्गयतिव्रतादि कर्माणि नास्तादिषु संविदध्यात् ॥**

यात्रादीनि कर्माणि गुरुशुक्रास्तादिषु न संविदध्यात् । तत्र यात्रा अपूर्वगमनम् । व्रतमुपनयनम् । जलाशयाः कूपतडागादयः । आराम उपवनम् । अग्निपरिग्रहोऽग्निहोत्रम् । दिव्यं तसमाषादिरूपम् । प्रपा पानीयशाला । तीर्थमपूर्वतीर्थेक्षणम् । गृहं गृहारम्भप्रवेशौ । अतिपन्नसंस्कारा अतिक्रान्ता जातकर्मादिसंस्काराः । दीक्षा मन्त्रग्रहणादिका । क्षितिपेक्षणमपूर्वराजदर्शनम् । यतिः संन्यासग्रहणम् । व्रतमनन्तव्रतादि । आदिशब्देन सोमाष्टकामहादानादीनि ॥

अस्तादिष्वित्यादिशब्देन गृहीतान्दोषविशेषानाह—

**गुरुभार्गववृद्धताऽस्तबाल्ये मकरे सिंहगवक्रगातिचारे।**
**रविणा च युते गुरौ विवर्ज्यं सकलं कर्म तथाऽत्रमाधिमासे९१**

उक्तं यानादि सकलं कर्म गुरुभार्गवयोर्वृद्धतायामस्ते बाल्ये च तथा मकरस्थे गुरौ सिंहस्थे वक्रगेऽतिचारे च विवर्ज्यम्। तथा गुरौ रविणा युते च। गुरुसूर्ययोरेकराशिस्थयोरिति यावत्। तथाऽत्रमः क्षयमासस्त-स्मिन्नधिमासे च विवर्ज्यम्॥

अथ मतान्तरेण गुर्वादित्यमाह—

**गुरौ सिंहस्थिते सूर्यो मीने धनुषि चागतः।**
**गुर्वादित्यं केचिदूचुर्वर्ज्यं सर्वसु कर्मसु॥ ९२॥**

गुरौ सिंहस्थिते सति मीने धनुषि वा गतः सूर्यो गुर्वादित्यस्तं के-चिदूचुः॥ यदाहुः—"गुरुसूर्यौ यदा स्यातामेकराशिमुपागतौ। गु-र्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु॥ गुरुराशिस्थिते सूर्ये सूर्यरा-शिस्थिते गुरौ। गुर्वादित्यः सोऽपि वर्ज्यो मङ्गलेषु जगुर्बुधाः॥" इति॥

अथ लुप्तसंवत्सरदोषमाह—

**अतिचारी गुरुः पूर्वराशिं नायाति वक्रितः।**
**लुप्ताब्दस्तत्र गोऽजान्त्यकुम्भान्यर्क्षेऽतिनिन्दितः॥ ९३॥**

गौर्वृषः अजो मेषः अन्त्यो मीनः कुम्भः प्रसिद्धः एभ्योऽन्यर्क्षे-ऽन्यराशौ मिथुनादौ अतिचारी गुरुः महातिचारेण समागतः सन् प-श्चान्नियमितदिनैर्वक्रितः यदा पूर्वराशिं नायाति तदा लुप्ताब्द उच्यते स शुभकृत्येऽतिनिन्दितः। उक्तं च—"एकस्मिन्वत्सरे जीवः स्पृशे-द्राशित्रयं यदि। लुप्तसंवत्सरो नाम सर्वकर्मसु निन्दितः॥" इति॥

अथ लुप्तसंवत्सरापवादमाह—

**दशमासावधिं कश्चिद्देवागङ्गान्तरे परैः।**
**अतिचारी ...**

कैश्चिदतिचारी गुरुर्दशमासावधि वर्ज्य उक्तः । "कालाध्वनोः—" इति द्वितीया । परैः रेवा नर्मदा तस्या भागीरथ्याश्चान्तर्वर्तिनि देशे वर्ज्य उक्तः । सिंहसंस्थे गुरौ च शुभे शुभकर्म्ये स गुरुर्वर्ज्य उक्तः ॥

**कैश्चिन्मेषान्यभस्थेऽर्के कैश्चिद्भाग्याद्यपादगः ।**
**भृग्वीज्यानोन्यसप्तर्क्षं पक्षं विश्वदिनं सजेत् ॥ ९५ ॥**

कैश्चित्तु मेषान्यभस्थेऽर्के मेषेतरराशिस्थे सूर्ये सिंहस्थगुरुर्वर्ज्य उक्तः । मेषस्थेऽर्के तु शुभः । कैश्चिद्भाग्याद्यपादगः पूर्वाप्रथमाङ्घ्रिपर्यन्तं वर्जितः । भृग्वीज्ययोः परस्परसप्तमराशिं सजेत् । नारदः—"समदृष्टिर्गुरोः शुक्रस्तन्मासे तु प्रयत्नतः । विवाहादि न कुर्वीत नर्मदातीर उत्तरे ॥" इति । यस्मिन्पक्षे तिथिद्वयह्रासः तं विश्वदिनं त्रयोदशदिनात्मकं पक्षं सजेत् । उक्तं च—"त्रयोदशदिने पक्षे विवाहादि न कारयेत्" इति ॥

अथ मकरवक्रगयोरपवादमाह—

**मकरे न शुभः शुभे गुरुर्मगधे कौङ्कणगौडसिन्धुषु ।**
**अपि वक्रगतिर्बृहस्पतिः स्वगृहोच्चेषु न दोषभाग्भवेत्॥९६॥**

मगधादिदेशेषु शुभकार्ये मकरे गुरुर्न शुभः । अर्थादन्यदेशेषु शुभः । उक्तं च—"मागधे गौडदेशे च सिन्धुदेशे च कौङ्कणे । व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥" इति । स्वगृहे धनुषि मीने च उच्चे कर्के स्थितो गुरुर्वक्रगतिरपि शुभः ॥

अथ होलिकाष्टकनिषेधं देशपरत्वेनाह—

**विपाशाशतद्रूनदीरावतीनां**
**तटेषूभयेष्वादरात्पुष्करेऽपि ।**
**विवाहादिके होलिकापूर्वमष्टौ**
**दिनानि सजेदन्यदेशे न दोषः ॥ ९७ ॥**

विपाशा शतद्रूनदी इरावती च पश्चिमदेशे प्रसिद्धा नद्यस्तासामु-

भयविधेषु तीरेषु पुष्करदेशे च होलिका फाल्गुनपूर्णिमा ततः पूर्वं अष्टौ दिनानि विवाहादिके शुभे त्यजेत् ॥

अथ मन्वादियुगादितिथीराह द्वाभ्याम्—

**मन्वादिरूर्जेऽर्कतिथी तिथिक्रमौ**
**चैत्रे शुचौ दिक् तिथिराश्विने नव ।**
**पौषे शिवा भाद्रपदे त्रयोऽन्तिमे**
**ज्येष्ठे च तिथ्यस्तपसि स्वराः सिते ॥ ९८ ॥**

ऊर्जे कार्तिके अर्कतिथी द्वादशीपौर्णमास्यौ । तथा चैत्रे तिथिक्रमौ पूर्णिमातृतीये । शुचावाषाढे दिक् दशमी तिथिः पूर्णिमा । आश्विने नवमी । पौषे शिवा एकादशी । भाद्रपदे तृतीया । अन्तिमे फाल्गुने तिथ्यः पौर्णमासी । ज्येष्ठे च पौर्णमासी । तपसि माघे च स्वराः सप्तमी । एताः सिते शुक्लपक्षे मन्वादयः ॥

**कृष्णे नभस्यष्टकुहूश्च कीर्तिता युगादिरूर्जे नव माधवेऽग्रयः ।**
**सितेऽसिते प्रोष्ठपदे त्रयोदशी माघे कुहूश्चात्र विवर्जयेद्व्रतम् ॥**

तथा नभसि श्रावणे कृष्णे बहुलपक्षेऽष्टमी कुहूरमावास्या च मन्वादिः कीर्तिता ॥ अथ ऊर्जे कार्तिके सिते शुक्लपक्षे नवमी कृतयुगादिः । तथा माधवे वैशाखे शुक्ले तृतीया त्रेतायुगादिः । प्रोष्ठपदे भाद्रपदेऽसिते कृष्णपक्षे त्रयोदशी कलियुगादिः । माघेऽमावास्या द्वापरादिः । अत्र युगादिमन्वादिषु व्रतमुपनयनं विवर्जयेत् ॥

अथ प्रातःसङ्गवादि भेदानाह द्वाभ्याम्—

**विभजेन्नवधा दिवसं पुण्याहान्यत्र पञ्च विषमांशाः ।**
**प्रातःसङ्गवमध्यापरसन्ध्याख्याः शुभेषु शुभाः ॥ १०० ॥**
**अश्लीलाख्याश्च समाश्चत्वारो ये शुभेषु ते त्याज्याः ।**
**तेऽप्यगतौ द्विजवचनात्पुण्या इत्येकका ब्रुवते ॥ १०१ ॥**

दिनं नवधा विभजेत् अत्र नवसंशेषु ये प्रथमतृतीयायाः पञ्च वि-

यमांशास्ते क्रमेण प्रातःसङ्गवमध्याह्नापराह्णसन्ध्याख्याः शुभे कार्ये शुभाः ॥ ये तत्र सप्तमाष्टमांशास्तेऽशीलनामकाः शुभेषु त्याज्याः । तेऽपि अगतौ गत्यन्तराभावे ब्राह्मणवचनात्पुण्याः शुभा इत्येके ब्रुवते ॥

अथानुक्तस्थले तिथ्यादिकं पूरयति—

यत्र नोक्ता तिथिस्तत्र ग्राह्या रिक्तायमां विना ।
वारोऽपि यत्र न प्रोक्तस्तत्रार्कार्किकुजान्विना ॥ १०२ ॥

यत्र यस्मिन्कृत्ये तिथिविशेषो नोक्तस्तत्र रिक्काममावास्यां च विहायावशिष्टाः सर्वा ग्राह्याः । तथा यत्र वारोऽपि विशेषेण नोक्तस्तत्र रविशनिभौमान्विहायावशिष्टाः सोमादयो ग्राह्याः ॥

अथोक्तेषु पञ्चाङ्गेष्वत्यन्तदुष्टत्वेन प्रसिद्धानां दोषमुत्प्रेक्षते—

मान्द्यानि मन्दोऽन्तकभीतिमान्तकं
भद्रा न भद्राण्यधृतिं च वैधृतिः ।
धत्तेऽधमत्वं यदमा मनीषिभि-
र्मन्ये ततोऽन्त्येषु पदेषु गण्यते ॥ १०३ ॥

मन्दः शनिवारो मान्द्यानि कार्यस्थैर्याणि अलसत्वानि वा धत्ते । तथान्तकं भरणी अन्तकभीतिं यमभयं धत्ते । भद्रा विष्टिर्भद्राणि मङ्गलानि न धत्ते । वैधृतियोगोऽधृतिमधैर्यं धत्ते । अमाऽमावास्याऽधमत्वं नीचत्वं धत्ते इति यदतस्तस्मान्मनीषिभिर्मन्दादिकमन्त्येषु पदेषु स्थानेषु गण्यत इत्यहं मन्ये उत्प्रेक्षे । नक्षत्राणां प्रायशः कृत्तिकादिक्रमेण गणनया भरण्या अन्तिमत्वं प्रसिद्धमेव ॥

कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।
रघुनाथो मुहूर्तेषु त्याज्यात्याज्यनिरूपणम् ॥ १०४ ॥

इति श्रीचित्तपावनजातीयशाण्डिल्यकुलमण्डनज्योतिर्वित्सरसात्मजरघुनाथकविकण्ठीरवविरचितायां मुहूर्तमालायां त्याज्यात्याज्यप्रकरणम् ॥

स्पष्टम् ॥

इति सुखठणकरोपाह्वभट्टरामचन्द्रसुतश्रीमन्महेश्वरभट्टविरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां त्याज्यात्याज्यप्रकरणं द्वितीयम् ॥

# प्रकीर्णप्रकरणम् ३

विनाशुमुहूर्तान्न च वस्त्रशस्त्रशास्त्रादिकानां फलसिद्धिरस्ति ।
वक्ष्ये ततस्तान्कतिचित्प्रकीर्णाञ्जीर्णानुरोधाद्व्यवहारसिद्ध्यै १

अथ प्रकीर्णप्रकरणं व्याख्यायते । जीर्णानुरोधात् प्राचीनग्रन्थानुसारेण प्रकीर्णान् मिश्रान् तान् मुहूर्तान् ॥ शेषं स्पष्टम् ॥

अथ ध्रुवादिनक्षत्राणि तत्तत्कृत्यं चाह सार्धैस्त्रिभिः—

ध्रुवं स्थिरं ब्राह्मभमुत्तराश्च शुभं भवेच्छान्तिकगेहकृत्ये ।
चरं मरुन्मातृहरित्रयं स्याद्यात्रागजाश्वादिकवाहनादौ ॥ २ ॥

ब्राह्मभं रोहिणी उत्तरात्रयं १२ । २१ । २६ चेति चत्वारि ध्रुवसंज्ञानि स्थिरसंज्ञानि चेति संज्ञाद्वयम् । इदं शान्तिके गृहारम्भादौ शुभम् । स्वाती पुनर्वसुः श्रवणत्रयं च चरसंज्ञकम् । तत्तु यात्रायां गजाद्यारोहणे आदिना वाटिकानिर्माणादौ च शुभम् ॥

क्रूरं तथोग्रं पितृयाम्यपूर्वाः शस्त्रास्त्रघाताग्निविषादिसिद्ध्यै।
साधारणं मिश्रभमग्निराधे तस्मिन्वृषोत्सर्गकृशानुसिद्धिः ॥३॥

मघा भरणी पूर्वात्रयं ११ । २० । २९ क्रूरसंज्ञमुग्रसंज्ञं च तच्छस्त्रादिसिद्ध्यै युक्तम् । अग्निः कृत्तिका राधा विशाखा इदं द्वयं साधारणादिसंज्ञम् । तत्र वृषोत्सर्गोऽग्निकृत्यं च सिद्ध्यति ॥

क्षिप्रं लघुश्चाश्विविधीज्यदास्रं भिषक्कलामण्डनपण्यपुण्ये ।
मैत्रं मृदुर्मित्रमृगान्त्यचित्रा मित्राम्बरं भूषणगीतमत्र ॥ ४ ॥

अश्वो हस्तः विधिरभिजित् ईज्यः पुष्यः दास्रमश्विनी इदं चतुष्कं क्षिप्रसंज्ञं लघुसंज्ञं च । इदं वैद्यकृत्यादौ प्रशस्तम् । तत्र कला मृत्यादिकाश्चतुःषष्टिः । मण्डनं भूषा । पण्यकृत्यं क्रयविक्रयात्मकं कर्म । पुण्यं धर्मः ॥ अनुराधामृगरेवतीचित्रा मैत्रसंज्ञा मृदुसंज्ञाश्च । अत्र मित्रं मित्रकृत्यं अम्बरं वस्त्रम् ॥

**स्याद्दारुणं तीक्ष्णमहीन्द्रमूलशैवं च बन्धाद्यभिचारमन्त्रे ।**

अहिराश्लेषा इन्द्रो ज्येष्ठा शैवमार्द्रा । बन्धादौ जारणमारणादिप्रयोगे च कथितम् ॥

अथ स्थिरादिसंज्ञान् वारानाह—

**सूर्यादिवारः स्थिरचञ्चलोग्रमिश्रा लघुर्मृद्वभिधोऽतितीक्ष्णः ५**

सूर्येति ॥ क्रमेण रव्यादिवाराः स्थिरादयः स्युः । मृद्वभिधो मृदुसंज्ञः । अत्रापि क्रमेण तत्तत्पूर्वोक्तकृत्यं ज्ञेयम् ॥

अथ वस्त्रभूषणधारणमुहूर्तमाह—

**वस्त्रभूषणविधिर्ध्रुवाश्विनी हस्तपञ्चकपुनर्वसुद्वये ।**
**पौष्णवासवभयोश्च सत्तिथौ मन्दभौमशशिवासरान्विना ॥६॥**

ध्रुवाणि ४ । १२ । २१ । २६ अश्विनी १ हस्तपञ्चकं १३ । १४ । १५ । १६ । १७ पुनर्वसुद्वयं ७ । ८ पौष्णभं २७ वासवभं २३ एषु नक्षत्रेषु सत्तिथौ रिक्तामारहिततिथौ मन्दभौमशशिवासरान्विना । शनिभौमसोमवाररहितवारे वस्त्रभूषणधारणं शस्तम् ॥

अत्र सुभगाविषये ध्रुवादिकर्म अपवदति—

**ध्रुवपुष्यादितौ योषिद्धत्ते या वस्त्रभूषणे ।**
**न साप्नोति पतिप्रीतिं स्नाति वारुणभेषु या ॥ ७ ॥**

रोहिण्युत्तरात्रय १२ । २१ । २६ पुष्यपुनर्वसुषु या सुवासिनी वस्त्रादिकं धत्ते सा पत्युः प्रीतिं न लभते । तथा वारुणभे शततारानक्षत्रे याऽभ्यङ्गस्नानं करोति सा च पतिप्रीतिं न प्राप्नोति ॥

**पादुकासनशय्यादिभोगः सन्निधिवासरे ।**
**याम्यस्थिरक्षिप्रमैत्रश्रोत्रमातृषु कीर्तितः ॥ ८ ॥**

पादुके उपानहौ । आसनं कम्बलादिकं श्रीपर्ण्यादिनिर्मितं वा । शय्या खट्वादिरूपा । आदिशब्दादास्तरणं ग्राह्यम् । एषामुपभोगः सन्निधौ मङ्गले च नाम याम्यादिनक्षत्रेषु कीर्तितः । रात मता पुर्नवसुः ॥

अथ वस्त्रस्य दाहादिदोषे सति शुभाशुभफलमाह—

**चेन्नव्यवस्त्रमध्यांशे दग्धस्फुटितपङ्किता ।**
**तत्त्यजेच्छान्तिकं कुर्यात्त्यजेदेवान्त्यभागयोः ॥ ९ ॥**

दैर्घ्येण त्रिधा विभक्तस्य नूतनवस्त्रस्य मध्यमेंशे दग्धता स्फुटितत्वं पङ्कलेपो वा चेत् तर्हि तद्वस्त्रं त्यजेत् । शान्तिकं कुर्यात् । एतदुक्तं भवति । वस्त्रं नवधा कृत्वा कोणस्थाश्चत्वारोंशा देवानाम् । तन्मध्यवर्तिनौ पाशदशान्तस्थौ भागौ मनुजानाम् । अवशिष्टा मध्यस्थास्त्रयोंशा राक्षसानाम् । तत्र देवांशे वस्त्रे दग्धे सति भोगः । मनुजांशे पुत्राप्तिः । राक्षसांशे मृत्युरिति ॥ अन्त्यभागयोरपि दग्धत्वादौ सति त्यजेदेव । एवशब्देन देवमनुष्यांशत्वेऽपि प्रान्तभागे त्याग एवोचित इति सूचितम् ॥

उक्तमर्थं शय्यादावतिदिशति—

**विज्ञेयमेतच्छय्यायामास्तृतौ पादुकास्वपि ।**
**सूचीकर्मादिसमित्रचित्रावसिन्दुदास्त्रभे ॥ १० ॥**

एतद्दाहादिके सति शुभाशुभं नूतनशय्यादावपि विज्ञेयमित्यर्थः । अथ सूचीकर्म सूचीसंबन्धि घटनं सीवनादिकर्म । पुनर्वस्वनुराधाचित्राधनिष्ठामृगाश्विनीषु शुभम् ॥

**वस्त्रक्षालनमश्वेज्यादित्यवस्वर्कपञ्चके ।**
**रिक्तापष्ठीश्राद्धपर्वशनिविद्दिवसान्विना ॥ ११ ॥**

अश्विनीपुष्यपुनर्वसुधनिष्ठाहस्तचित्रास्वातीविशाखानुराधासु वस्त्राणां क्षालनं रजकादिना धावनं तदर्थं दानं कार्यम् । रिक्ता ४ । ९ । १४ विद्दिवसो बुधवारः । रिक्तादिषु न कार्यमित्यर्थः ॥

अथ स्वर्णादिपात्रे भोजनमुहूर्तमाह—

**भोजनं भाजने स्वर्णरूप्यकांस्यादिनिर्मिते ।**
**कुर्यादमृतयोगेषु चरक्षिप्रमृदुध्रुवैः ॥ १२ ॥**

चरलघुमृदुस्थिरनक्षत्रैर्युक्ते काले । "नक्षत्रे च लुपि" इत्यादिना तृतीया । अमृतयोगेषु हस्तार्कादिषु स्वर्णादिनिर्मिते पात्रे भोजनं कार्यम् ॥

**स्याद्भूषणानां घटनं चरर्क्षक्षिप्रध्रुवे सत्तिथिवासरेषु ।**
**अन्येषु वारेष्वपि वा विधेयं त्रिपुष्कराख्यो यदि तत्र योगः**

चरक्षिप्रध्रुवनक्षत्रे सत्तिथौ सद्वारेषु सोमबुधगुरुशुक्रेषु । यदि भौमादिवारेषु त्रिपुष्कराख्यो योगोऽस्ति तर्हि तेष्वपि वारेषु भूषणानां घटनं घटनारम्भणं विधेयम् । त्रिपुष्करयोगस्तु पूर्वप्रकरणे उक्तः ॥

**रत्नाञ्चितं यदि चरस्थिरमिश्रमैत्र-**
**क्षिप्रेषु भास्वति कुजेऽह्नि तयोश्च लग्ने ।**
**मैत्रध्रुवर्क्षलघुचञ्चलभे सितेन्द्वो-**
**र्वारे तनौ रजतमौक्तिकवज्रयुक्तम् ॥ १४ ॥**

यदि तद्भूषणं रत्नाञ्चितं माणिक्यादिसंयुतं तदा चरस्थिराद्यष्टादशनक्षत्रेषु भास्वति रविवारे कुजेऽह्नि भौमवारे तथा तयोर्भास्वत्कुजयोर्लग्ने सिंहमेषवृश्चिकरूपे कार्यम् । अथ तद्भूषणं रजतमौक्तिकवज्राद्यन्यतमयुक्तं चेत्तदा मैत्रध्रुवादिषोडशनक्षत्रेषु भृगुसोमयोर्वारे तल्लग्ने कर्कवृषतुलारूपे कार्यम् ॥

**मुद्राविधिर्ध्रुवक्षिप्रचरमैत्रैः शुभैस्तनौ ।**
**पूर्णाजयातिथौ त्यक्त्वा सितेज्यास्तं विधुं शनिम् ॥ १५ ॥**

ध्रुवक्षिप्रचरमैत्रसंज्ञकैः षोडशनक्षत्रैः तथा तनौ लग्ने स्थितैः शुभैः शुभग्रहैरुपलक्षिते काले । पूर्णा ५ । १० । १५ जया ३ । ८ । १३ एतस्यां तिथौ मुद्राविधिः मुद्राणां राजमुद्राङ्कितसुवर्णरूप्यादिव्यावहारिकद्रव्याणां विधिर्निष्पादनं उचितम् । तत्र सितेज्यास्तं भृगुबृहस्पत्योरस्तं विधुशनिवारौ च त्यक्त्वा कार्यम् ॥

शस्त्रघट्टनमयोग्रविशाखाद्यम्भिदारुणमृगेषु जयाय ।
शस्त्रधारणविधिर्ध्रुवराधाक्षिप्रमैत्रमघवाऽदितिभेषु ॥ १६ ॥
केन्द्रगैः शुभखगैः स्थिरलग्ने चन्द्रमस्यपि शुभग्रहदृष्टे ।
शुक्रभास्करबृहस्पतिवारे रिक्तवर्जिततिथौ शुभयोगे ॥ १७ ॥

उग्रादित्रयोदशनक्षत्रेषु शस्त्रनिर्माणं जयाय भवति । तत्राग्निः कृत्तिका ॥ अथ शस्त्रधारणमुहूर्तमाह सार्धेन—शस्त्रेति । ध्रुवादिचतुर्दशभेषु तथा स्थिरलग्ने वृषसिंहवृश्चिककुम्भाख्येषु लग्ने सति । शुभखगैः केन्द्रगैः विलग्नचतुर्थसप्तमस्थानस्थितैः सद्भिः । चन्द्रमसि अपिशब्दाल्लग्नेऽपि शुभग्रहैर्दृष्टे सति । तथा भृगुरविगुरुवारे । रिक्ततिथिरहिततिथौ शुभयोगे व्यतीपातादिरहितयोगे शस्त्राणां खड्गबाणादीनां धारणविधिः शुभः ॥ तत्र राधा विशाखा । मघवा ज्येष्ठा ॥

तरणिघटनमुक्तं पित्र्ययाम्यत्रयार्द्रा-
बलभिदहिविशाखाभिन्नभेऽर्केज्यशुक्रे ।
ध्रुवलघुचरमैत्रे ज्ञे गुरौ वा खलग्ने
सुरगुरुबुधवर्गस्थे विधौ शिल्पविद्या ॥ १८ ॥

पित्र्यं मघा । याम्यत्रयं भरणीकृत्तिकारोहिण्यः । बलभिज्ज्येष्ठा । अहिराश्लेषा । आर्द्राविशाखे प्रसिद्धे । एतद्भिन्नेषु एकोनविंशतिनक्षत्रेषु । रविगुरुभृगुवारे तरणिघटनं नौकानिर्माणं कार्यम् । नौचालनं नौकागमनं च मुहूर्तदीपिकायाम्—"शुभाहे विष्णुयुग्मेन्दुभगमैत्राश्विपाणिषु । चलनं घटनस्थानान्नावः शुभतिथीन्दुषु ॥ अश्विकरेज्यसुधानिधिपूर्वामित्रवनाच्युतभे शुभलग्ने । तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे ॥" इति ॥ अथ शिल्पविद्यामुहूर्तमाह—ध्रुवेति—ध्रुवादिषोडशनक्षत्रेषु ज्ञे बुधे खलग्ने दशमे लग्ने वा सति । अथ वा गुरौ दशमे लग्ने वा सति । तथा विधौ चन्द्रे गुरुबुधषड्वर्गस्थे शिल्पं मूर्तिनिर्माणादिकं तद्विद्या प्रशस्ता ॥

अश्वस्य कृत्यमदितीन्दुशतश्रविष्ठा-
क्षिमान्त्यवायुषु विरिक्तकुजेऽह्नि तत्र ।
सूर्यर्क्षतस्तिथिमितानि शुभानि तस्मा-
देकादश स्युरशुभानि शुभे ततो द्वे ॥ २२ ॥

पुनर्वसुमृगशतताराधनिष्ठाहस्ताश्विपुष्याभिजिद्रेवतीस्वातीषु । रिक्ता-भौमरहितेऽह्नि अश्वकृत्यं क्रयविक्रयशिक्षास्थापनभूषणादि प्रशस्तम् । अथाश्वचक्रमाह—तत्रेति । सूर्यनक्षत्रात् चन्द्रनक्षत्रं साभिजिद्गणयित्वा तत्र पञ्चदश भानि शुभानि स्युः । तत एकादश भान्यशुभानि । ततो द्वे शुभे । इदं चक्रमश्वारोहणे ज्ञेयम् ॥

गोविक्रयक्रयविधिर्वरुणाद्विदैव-
क्षिमान्त्यवन्ह्यदितिवासवशाक्रभेषु ।
दध्नस्तु मन्थनविधिर्विधुमूलमित्र-
क्षिमाजपाद्वसुविशाखजलान्त्यरौद्रे ॥ २३ ॥

'गवां विक्रयो मूल्यग्रहणपूर्वकं दानम् । क्रयस्तु मूल्येन परस्माद्ग्र-हणम् । तद्विधिः शततारकादिदशनक्षत्रेषु शुभः । तत्र द्विदैवं विशाखा ॥ दधिमन्थनविधिस्तु मृगादिद्वादशभेषु शुभः ॥

रक्षा पशोश्च चरभे पशुयोनिभे वा
लग्ने शुभेऽष्टमविशुद्धियुते विधेया ।
रिक्ताष्टमीकुजहरिध्रुवतक्षभानि
त्यक्त्वोदितानि मुनिभिः स्थितिवेशनानि ॥२४॥

चरनक्षत्रे शुभे शुभस्वामिकेऽष्टमविशुद्धियुते लग्ने पशुरक्षा कर्तव्या। पशुयोनिभे वा । यथा—अश्वानां योनिभमश्विनी शततारा च। तत्र तत्पशो रक्षा विधेया । रिक्ता ४ । ९ । १४ अष्टमी ८। कुजो भौमः । हरिः श्रवणः। ध्रुवाण्युत्तरात्रयरोहिण्यः। तक्षभं चित्रा। एतानि त्यक्त्वा शेषेषु पशोः स्थितिवेशनानि गोष्ठादिस्थानानिवेशनानि मुनिभिः प्रोक्तानि ॥

आनर्तादयस्त्रयो देशविशेषाः । दितिरदिती कश्यपपत्न्यौ । श्रीशो विष्णुः । क्षौरकाले एषां स्मरणात्सप्तदोषा नश्यन्ति ॥

**सेव्यसेवकविधिर्लघुमैत्रेऽर्केज्यबुधशुक्रविदि योनिभमैत्र्याम् ।**
**लग्नगैः शुभखगैर्दशमायस्थानगेऽम्बरमणौ रुधिरे वा ॥३३॥**

लघुमैत्रे हस्ताश्विपुष्याभिजिन्मृगरेवतीचित्रानुराधासु । तथा रविगुरुबुधवासरेषु । योनिश्च भं च योनिभे तयोर्मैत्र्यां स्वामिसेवकयोर्मैत्र्यां तद्राशिस्वामिमैत्र्यां च सत्यामित्यर्थः । योनिमैत्रीं भमैत्रीं च विवाहप्रकरणे वक्ष्यति । शुभग्रहैर्लग्नगैः सद्भिः अम्बरमणौ रवौ रुधिरे भौमे वा दशमैकादशस्थे सति सेव्यसेवकविधिः । स्वामिसेवकत्वं सेवालक्षणं प्रशस्तम् ॥

**सेवकभं सेव्यर्क्षादधमर्णर्क्षं तथोत्तमर्णर्क्षात् ।**
**यदि च भवति द्वितीयं सेवावैयर्थ्यमर्थनाशश्च ॥ ३४ ॥**

सेव्यः स्वामी तन्नक्षत्रात्सेवकनक्षत्रं यदि द्वितीयं भवति तदा सेवाया वैयर्थ्यं नैष्फल्यमेव । तथा ऋणं यः प्रयच्छति स उत्तमर्णः। यस्तु गृह्णाति सोऽधमर्णः । उत्तमर्णनक्षत्रादधमर्णनक्षत्रं च द्वितीयं चेत्तदा वित्तनाशः फलम् ॥

**द्रव्यप्रयोगोऽदितिमित्रपुष्यद्वीशाश्विनीस्वातिहरित्रये स्यात् ।**
**चरे तनौ धर्मसुताष्टशुद्धौ न सङ्क्रमेऽर्के न करे न वृद्धौ ॥ ३५ ॥**

हरित्रयं श्रवणादित्रयम् । अदित्यादिद्वादशनक्षत्रेषु चरे तनौ मेषकर्कतुलामकराणामन्यतमे लग्ने । धर्मो नवमं सुतः पञ्चमं अष्टाष्टमं एतेषां शुद्धिर्नवपञ्चमयोः पापग्रहराहित्यं अष्टमे तु शुभपापराहित्यमेवंरूपा । तस्यां द्रव्यप्रयोगः ऋणदानं शुभं स्यात् । सङ्क्रमे सङ्क्रान्तिदिवसे । अर्के रविवारे । करे हस्तनक्षत्रे। वृद्धौ वृद्धियोगे च न शुभम्॥

**भौमे ग्राह्यं न ऋणं कुर्यादत्रादरादृणच्छेदम् ।**
**न बुधे धनं प्रदेयं सङ्गृह्णीयाद्धनान्यत्र ॥ ३६ ॥**

अत्र भौमवारे ऋणच्छेदं कुर्यात् । अत्र बुधे धनानि सङ्गृह्णीयात् । शेषं स्पष्टम् ॥

अथ हलप्रग्रहणमाह द्वाभ्याम्—

**हलप्रवाहश्चरमैत्रमूलक्षिप्रध्रुवद्वीशमघासु शस्तः ।**
**विरिक्तषष्ठ्यां सकुजे शुभेऽह्नि विधौ जलांशे सबले सितेऽब्जे**
**लग्ने गुरौ हीनबलैः खलैश्च नृयुग्मृपाल्यम्बिझषाङ्गनाङ्के ।**
**सूर्योज्झितर्क्षात्त्रिगजाङ्कनागमितं ह्रसत्सद्धलचक्रमेतत् ॥ ३८ ॥**

चरादिष्वेकोनविंशतिनक्षत्रेषु रिक्तापष्ठीरहिततिथ्यां शुभवारे भौमवारे च चन्द्रे जलराशिनवांशगे सति शुक्रे चन्द्रे च सबले पुष्टे सति गुरौ लग्नस्थे सति पापैर्बलरहितैः सद्भिः । मिथुनवृषवृश्चिकधनुर्मीनकन्याख्ये लग्ने प्रथमहलप्रवाहः प्रशस्तः ॥ अथ हलचक्रमाहार्धेन—सूर्येति । सूर्येण उज्झितं मुक्तं यद्धं नक्षत्रं तस्मात्क्रमेण त्रीणि अशुभानि ततोऽष्टौ भानि शुभानि ततो नव भान्यशुभानि ततोऽष्टौ शुभानि । यथा—सूर्ये भरण्यां स्थिते भुक्तनक्षत्रमश्विनी तत आरभ्य त्रीण्यसन्ति ततो रोहिण्या आरभ्याष्टौ शुभानि एवमुत्तरत्र ॥

**बीजोप्तिरुक्तोक्तदिने शतर्क्षादितिश्रवोद्वीशकुजान्विहाय ।**
**राहोर्भतोऽष्टाग्निशशित्रिकुत्रिकुत्र्यब्ध्यसत्सत्फणिचक्रमेतत् ३९**

उक्तदिने-पूर्वोक्तदिवसे बीजोप्तिरुक्ता बीजवापनं विहितम् । परंतु शततारापुनर्वसुश्रवणविशाखानक्षत्राणि भौमवारं च विहाय शेषेषु स्वातीधनिष्ठामृदुमूलक्षिप्रध्रुवमघानक्षत्रेषु शुभवारे च बीजोप्तिः कार्येत्यर्थः । अत्र फणिचक्रमावश्यकं तदाह—राहोरिति । यस्मिन्नक्षत्रे राहुः स्थितस्तन्नक्षत्रादष्टौ नक्षत्राण्यशुभानि ततस्त्रीणि शुभानि तत एकमशुभं ततस्त्रीणि शुभानि तत एकमसत् ततस्त्रीणि सन्ति तत एकमसत् ततस्त्रीणि शुभानि ततश्चत्वार्यशुभानि,' 'एतस्मिन्फणिचक्रेऽनुष्ठेयम्'। यत्राद्यन्तानां द्वन्द्वैक्यम् । उप्तशुद्धिमाह वसिष्ठः—"भवारिपुत्रहजे पापैः

शतं शततारा । शेषं स्पष्टम् । शेषेषु एकोनविंशतिनक्षत्रेषु. स्थिरे वृष-सिंहादौ धान्यानां यवादीनां छेदः कार्यः ॥

क्षीरद्रुमजनितं खलमध्ये स्तम्भकाष्ठमुचितेऽह्नि निखन्यात् ।
हस्तपिञ्च्यकमलासनमूलस्वातिवृध्न्यमृगपौष्णभविश्वैः ॥ ९० ॥

हस्तादिनवनक्षत्रैः युक्तेऽहनि खलं धान्यमर्दनार्थमङ्गणं तत्र क्षीर-तरुसम्भवं स्तम्भकाष्ठं रोपयेत् । कमलासनो रोहिणी ॥

धान्यानां मर्दनं ज्येष्ठामूलार्यममघाश्रुतौ ।
रेवतीरोहिणीमित्रभाग्ये भाग्यवतां भवेत् ॥ ९१ ॥

भाग्यं पूर्वाफल्गुनी एषु भेषु दैववतां हिताय धान्यानां मर्दनं चण-कादीनां पितुपीकरणं व्रीह्यादीनां कणिशेभ्यः पृथक्करणं च भवेत् ॥

धान्यस्य सङ्ग्रहः क्षिप्रमूलमैत्रचरध्रुवैः ।
सद्वारतिथिषु त्यक्त्वा मेषकर्कतुलास्तनौ ॥ ९२ ॥

मेषकर्कतुलास्त्यक्त्वा विशिष्टे लग्ने क्षिप्रादिषु च धान्यस्य सङ्ग्रह एकत्रस्थले स्थापनं शुभम् ॥

धान्यवृद्धिर्ध्रुवेज्येन्द्रद्वीशाश्विचरभे शुभा ।
विधिनाऽनेन धान्यानां धान्यैरन्यूनमालयम् ॥ ९३ ॥

ईज्यः पुष्यः । एतेषु त्रयोदशनक्षत्रेषु धान्यवृद्धिर्गृहमेतावद्धान्यं देहि मासद्वयानन्तरमेतत्सपादं सार्धं वा दास्यामीत्येवंरूपा धान्यस्य वृद्धिः शुभा । अनेन धान्यानां विधिना आलयं गृहं धान्यैरन्यूनं समृद्धं भवतीति विशेषः ॥

नवान्नं सबले लग्ने मृदुक्षिप्रचरे दिवा ।
त्यक्त्वा विषघटीं नन्दां मधुपौषौ कुजार्कजौ ॥ ९४ ॥

लग्ने सबले । शुभग्रहैर्युते दृष्टे चेत्यर्थः । विषघट्यादिकं त्यक्त्वा न-वान्नभक्षणं शुभम् । विषघट्यस्तु प्रागुक्ताः ॥

धर्मक्रिया मित्रचरध्रुववर्क्षक्षिमेषु शुक्रेज्यरवीन्दुवित्सु ।
बुधेज्यषड्वर्गयुते विलग्ने लग्ने गुरौ गोचरतोऽपि शुद्धे ॥ ९५ ॥

मित्रादित्रयोदशनक्षत्रेषु । शुक्रादिवारेषु । तत्र वित् बुधः । तथा बुधबृहस्पत्योः षड्वर्गविशिष्टे लग्ने सति । गुरौ च लग्नस्थे सति गोचरतोऽपि 'गुरुः पञ्चचित्ताङ्कसप्तायसंस्थः' इति गोचरप्रकरणोक्तरीत्यापि गुरौ शुद्धे सति । धर्मक्रिया कोटिहोमादिरूपा । कथितेति शेषः ॥

स्याच्छान्तिकं चरलघुध्रुवमित्रपित्र्य-
पौष्णे रवौ दशमगे धिषणे विलग्ने ।
चन्द्रे सुखे गुरुसिताभ्युदये विधेयं
नैमित्तिके रुजि च नास्तविचारणास्ति ॥ ९६ ॥

चरादिपञ्चदशनक्षत्रेषु तथा लग्नाद्दशमगे रवौ सति गुरौ लग्नस्थे सति चन्द्रे चतुर्थगे सति तथा गुरुसिताभ्युदये गुरुशुक्रयोरस्तादिराहित्ये शान्तिकं ग्रहमखविनायकशान्त्यादिकं स्यात् ॥ नैमित्तिके धूमकेत्वाद्युत्पातादिनिमित्ते रोगे च सति अस्तविचारणा नास्ति ॥

वीराभिचारयोः सिद्धिर्मूलार्द्रेन्दुमघान्तके ।
शुद्धेऽष्टमे बुधे कुम्भलग्नगे बन्धुगे सिते ॥ ९७ ॥

मूलादिपञ्चनक्षत्रेषु बुधे कुम्भलग्नस्थे सति शुक्रे चतुर्थगे अष्टमे शुद्धे ग्रहरहिते सति । वीरस्य वीरकर्मणः अभिचारस्य च जारणादिकर्मणः सिद्धिर्भवति ॥

अग्न्याधानं मृगान्त्यध्रुवगुरुबलभिन्मिश्रभैर्नाष्टमाङ्गे
केन्द्रत्र्यायारिकोणेष्विनकुजगुरुचन्द्रेषु सौम्यायने स्यात् ।
लग्नांशौ नक्रकर्कोण्डजघटघटितौ लग्नगौ चन्द्रशुक्रौ
रिक्तास्तस्वस्वास्तनीचारिगृहगविजितांश्चेन्दुभौमेज्यशुक्रान्

गुरुः पुष्यः । बलभिज्ज्येष्ठा । एतैर्मृगादिभिर्दशभिर्नक्षत्रैरग्न्याधानमग्निहोत्रारम्भः स्यात् । अष्टमाङ्गे आधानकर्तुर्जन्मराशेर्जन्मलग्नाद्वाऽष्टमे

लग्नेऽग्न्याधानं न कार्यम् । केन्द्राणि १ । ४ । ७ । १० त्र्यायाश्च ३ । ११ । ६ कोणं ९ । ५ एतेषु रविभौमगुरुचन्द्रेषु सत्सु । तथा सौम्यायने उत्तरायणे स्यात् । प्रशस्तमित्यर्थः । नक्रो मकरः । कर्कः प्रसिद्धः । अण्डजो मीनः । घटः कुम्भः । एतद्रहितं लग्नं नवांशं च त्यक्त्वा । तथा लग्नस्थं चन्द्रं शुक्रं च त्यक्त्वा । रिक्ताश्च ४ । ९ । १४ त्यक्त्वा । तथा चन्द्रभौमगुरुशुक्रानस्तंगतान्नीचगतान्छत्रुस्थानस्थितान्महान्तरैर्वर्जिताश्च त्यक्त्वा तद्विधेयमित्यर्थः । ग्रहविजयो ग्रहगणिते प्रसिद्धः ॥

धनुर्लग्ने गुरुर्भौमो मेषस्थः खे द्युनेऽथवा ।
षड्त्र्यायेऽर्कः शशी वा स्याद्यस्याधाने स यज्ञकृत् ॥५९॥

यस्य यजमानस्याधाने गुरुर्धनुर्लग्ने स्थितः । गुर्वधिष्ठितं धनुराख्यं लग्नमित्यर्थः । अयमेको योगः ॥ अथ वा भौमो मेषस्थः । अयं द्वितीयो योगः ॥ अथ वा खे दशमे भौमः । अयं तृतीयो योगः ॥ यद्वा द्युने सप्तमे भौमः । अयं चतुर्थः ॥ अथ वा षड्त्र्याये ६ । ३ । ११ रविः शशी वा । प्रत्येकं योगत्रयमेतत् ॥ एवंविधो योगः स्यात्तर्हि ■ आहिताग्निर्यज्ञकृत् । ज्योतिष्टोमादियागं करिष्यतीत्यर्थः ॥

होमाहुतिः सूर्यभतस्त्रिभंत्रिभं
गण्यं मुहुस्तत्र च चन्द्रभावधि ।
सूर्यज्ञशुक्रार्कजचन्द्रभूमिजा
जीवस्तमः केतुरसत्सु सन्मुखे ॥ ६० ॥

सूर्याक्रान्तनक्षत्राच्चन्द्रनक्षत्रपर्यन्तं त्रयं त्रयं मुहुर्गणनीयम् । तत्र तेषु त्रिकेषु सूर्यज्ञशुक्रादयः क्रमेण ज्ञेयाः । तत्रासन्मुखे पापग्रहमुखे होमाहुतिरसत्यप्रशस्ता ॥ यथा—सूर्यनक्षत्रान्नक्षत्रत्रयमध्ये चन्द्रभे सति सूर्यमुखे होमाहुतिपातः स नेष्टः । ततो नक्षत्रत्रये बुधस्य मुखे । तनस्त्रये शुक्रस्य । ततः शनेः । ततश्चन्द्रस्य । ततो भौमस्य । ततो गुरोः । ततो राहोः । ततः केतोरिति ॥

अथ यद्दिने होममश्चिकीर्षितस्तद्दिने वह्निनिवासपरीक्षां तत्फलं चाह द्वाभ्याम्—

**शुक्लादितस्तिथिः सैका वारयुक्ताऽब्धिशेषिता ।**
**खे गुणे भुवि वासोऽग्नेर्द्व्येकयोः स्यादधो दिवि ॥ ६१ ॥**

शुक्लप्रतिपदमारभ्य वर्तमानतिथिरेकयुक्ता वर्तमानवारयुक्ता च कर्तव्या । ततोऽब्धिशेषिता चतुर्भिस्तष्टा शेषे शून्ये त्रये वा अग्नेर्भुवि वासः । द्विमिते शेषेऽधः पातालेऽग्निवासः । एकमिते शेषे दिवि स्वर्गेऽग्निवासः॥

फलमाह—

**सौख्याय होमो भौमेऽग्नावर्थप्राणहृदन्यतः ।**
**नायं विचारः संस्कारनित्यनैमित्तिकादिषु ॥ ६२ ॥**

सौख्येति । होमदिने भूमावग्निवासे सति होमः सौख्याय भवति । अन्यतः लोकान्तरेऽर्थप्राणहृत् । पातालस्थेऽग्नौ कर्तुरर्थनाशः । स्वर्गस्थे तु प्राणनाश इत्यर्थः । अयमग्नेर्विचारः संस्कारादिषु न कर्तव्यः । आदिना वैष्णवे प्रतिसांवत्सरिके च कर्मणि । तदुक्तम्— "संस्कारेषु विचारोऽस्य न कार्यो नापि वैष्णवे । नित्यनैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः ॥" इति ॥

**खेटसुतं रविं चन्द्राद्बुधान्मन्दं सितात्कुजम् ।**
**गुरोरगुं वसवब्ध्यष्टनवमं तत्यजुः परे ॥ ६३ ॥**

परे केचिच्चन्द्राधिष्ठितराशेरष्टमराशिस्थं रविं खेटसुतसंज्ञं होमे तत्यजुः । एवं बुधाच्चतुर्थं मन्दम् । शुक्रादष्टमं भौमम् । गुरोर्नवमं राहुम् । खेटसुतं त्यजन्ति स्म । एतदपि नित्यादिषु न विचारणीयम् ॥

अथ तत्तन्नक्षत्रोत्पन्नज्वरनिवृत्तौ दिनसङ्ख्यामाह त्रिभिः—

**ज्वरः पुष्यादितिब्राह्मत्वाष्ट्रार्यमसु सप्तभिः ।**
**मूलाग्न्यश्वेषु नवभिर्याम्यचित्राशतश्रुतौ ॥ ६४ ॥**

रुद्रैर्वसुकरद्वीशे तिथिभिः पितृभे नखैः ।
त्रिंशद्भिर्दिवसैर्वैभचान्द्रयोर्विनिवर्तते ॥ ६५ ॥
रेवत्यामनुराधायां भवेदस्थिगतो ज्वरः ।
पूर्वेन्द्राद्रामरुत्सार्पे मरणायैव केवलम् ॥ ६६ ॥

पुष्यपुनर्वसुरोहिण्युत्तराभाद्रपदोत्तराफल्गुनीषु ज्वर उत्पन्नः सप्तभिर्दिनैर्विनिवर्तते । एवं मूलकृत्तिकाश्विनीषु नवभिर्दिनैः । भरणीचित्राशततारा श्रवणेषु एकादशभिः । धनिष्ठाहस्तविशाखासु पञ्चदशभिः । मघायां विंशतिदिनैः । उत्तराषाढामृगशिरसोस्त्रिंशत्सङ्ख्याकैर्दिवसैर्विनिवर्तते । रेवत्यनुराधयोरुत्पन्नो ज्वरोऽस्थिगतो भवेत् । स्थिरस्तिष्ठेदित्यर्थः । पूर्वात्रयज्येष्ठार्द्रास्वात्याश्लेषासु केवलं मरणाय निश्चितः ॥

रोगश्चेद्वसुशततारपेशाक्रपूर्वा-
द्वीशार्द्राऽनलयमभेषु पापवारे ।
स्याद्रिक्ताहरिशिखिवाहनीयतिथ्यां
योगेऽस्मिन्मृतिरचिरेण रोगिणः स्यात् ॥ ६७ ॥

धनिष्ठादिनक्षत्रेषु पापवारे रिक्तादितिथ्यां च सत्यां एवंविधविशिष्टयोगे यस्य रोगोत्पत्तिस्तस्य रोगिणः शीघ्रं मृतिः स्यात् । तत्र हरिर्द्वादशी । शिखिवाहनीयः स्कन्दस्तत्तिथिः षष्ठी ॥

सर्पस्य दंशः सार्पार्द्रामूलमित्रमघान्तके ।
मरणायैव शीतांशुर्गोचरे बलवान्न चेत् ॥ ६८ ॥

आश्लेषादिनक्षत्रेषु सर्पस्य दंशो दष्टपुरुषस्य मरणायैव भवति । यदि तस्य गोचरवशेन चन्द्रबलं न स्यात् ॥

अस्त्रविमोक्षः शतमित्ररोहिणी-
मृगेन्द्रचित्रालघुकर्णवायुषु ।
रवीज्यभौमेषु तथा विरेचनं
वमिश्च तेष्वेव विना बुधार्कजौ ॥ ६९ ॥

इन्द्रो ज्येष्ठा । कर्णः श्रवणः । शततारादिनक्षत्रेषु रविगुरुमङ्गलवारेषु असृग्विमोक्षः रुधिरवाहिन्याः शिरायाः सूक्ष्मशस्त्रघातेन ततः कुत्सितरक्तस्य विमोक्षणं विहितम् ॥ तथा बुधशनिवारौ विनान्यवारेषु । तेषु पूर्वोक्तशततारादिनक्षत्रेषु विरेचनगौषधेन मलोत्सर्गः वमिर्वमनं च विहितम् ॥

अथ रोगनिर्मुक्तस्नानमुहूर्तमाह द्वाभ्याम्—

**रोगान्मुक्तः शाङ्करमित्रक्षिमेन्द्रमूलपूर्वासु ।**
**चित्रामित्रश्रोत्रत्रयमृगयाम्येऽर्कविल्कुजेज्याऽर्की ॥ ७० ॥**
**रिक्तायां चरलग्ने कण्टककोणायसंस्थितैः पापैः ।**
**गोचरचन्द्राशुद्धौ यः स्नायात्तस्य दूरतो रोगाः ॥ ७१ ॥**

शाङ्करमार्द्रा तदादिनक्षत्रेषु । रविबुधभौमगुरुशनिवारेषु । रिक्तायां ४।९।१४ तिथौ । चरलग्ने मेषकर्कतुलामकराख्ये । तथा पापग्रहैः कण्टकानि १।४।७।१० कोणं ९।५ आयः ११ एषु स्थानेषु स्थितैः सद्भिः । तथा गोचरचन्द्राशुद्धौ गोचरवशेन चन्द्रबलराहित्ये । रोगान्मुक्तो यः स्नायात्तस्य रोगाः दूरतः । पुनर्न स्युरित्यर्थः ॥

**विविधजलतटाकाऽऽरामदेवप्रतिष्ठा**
**ध्रुवलघुचरमैत्रैर्भौमरिक्तातिरिक्तैः ।**
**सहजरिपुभवस्थैश्चन्द्रपापैस्तदन्यै-**
**र्व्ययमृतिगृहवर्जैर्नैव याम्ये न कृष्णे ॥ ७२ ॥**

विविधाः वापीकूपादयो जलतटाका जलाशयास्तेषां आरामस्योपवनस्य प्रतिष्ठोत्सर्गः । देवानां विष्ण्वादिमूर्तीनां प्रतिष्ठापनम् । ध्रुवादिषोडशनक्षत्रैः । भौमातिरिक्तैर्वारैः । रिक्तातिरिक्तैस्तिथिभिः । चन्द्रश्च पापग्रहाश्च तैर्लग्नात्तृतीयषष्ठैकादशस्थानस्थितैः । तदन्यैः शुभग्रहैर्व्ययमृतिगृहवर्जैः द्वादशाष्टमस्थानव्यतिरिक्ताखिलस्थानस्थितैः सद्भिः प्रशस्ता स्यात् ॥ याम्ये दक्षिणायने कृष्णे कृष्णपक्षे च नैव कार्या ॥

तत्र सुरस्थापने विशेषमाह चतुर्भिः—

कार्यं सुरस्थापनमुत्तरायणे
तत्रार्कदेवीशविरिञ्चिविष्णवः ।
स्थाप्या हरिद्वयङ्गनृयुग्घटाङ्गना-
तनौ क्रमादीप्सितसिद्धये बुधैः ॥ ७३ ॥

सर्वेषां सुराणां स्थापनं उत्तरायणे कार्यम् । तत्रोग्रदेवतानां दक्षिणायनेऽपि स्थापनं वक्ष्यति । तत्रार्कादयः क्रमेण सिंहादिषु लग्नेषु अभीष्टसिद्धये बुधैः स्थाप्याः । तथा—अर्कः सिंहे । देवी द्विस्वभावे मिथुनादौ । ईशो मिथुने । विरिञ्चिः कुम्भे । विष्णुः कन्यायाम् ॥

गणेशयक्षसर्पादीन्रेवत्यां स्थापयेत्सुधीः ।
ग्रहान्पुष्ये क्षुद्रदेवांश्चरलग्ने जिनं श्रुतौ ॥ ७४ ॥

गणेशो विनायकः । यक्षः पुण्यजनो देवयोनिविशेषः । सर्पाः वासुक्यादयः । आदिना भूतप्रमथादयस्तान् रेवतीनक्षत्रे स्थापयेत् । ग्रहांश्चन्द्रादीनष्टौ पुष्ये स्थापयेत् । क्षुद्रदेवान् चतुःषष्टियोगिन्यादीन् चरलग्ने मेषकर्कादौ । जिनं बुद्धं श्रुतौ श्रवणनक्षत्रे स्थापयेत् ॥

मातृभैरववराहनृसिंहान्वामनं च महिषासुरहन्त्रीम् ।
दक्षिणायनगते दिननाथे स्थापयेदथ मनोरथसिद्ध्यै॥७५॥

मातृभैरवाद्या देवता मनोरथस्य सिद्ध्यै स्वाभिमतफलाप्तये दक्षिणायनगेऽपि सूर्ये स्थापयेत् । तत्र मातरो ब्राह्म्यादयः । उक्तं च—"मातृभैरववराहनारसिंहत्रिविक्रमाः । महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥" इति ॥

तिथीश्वराणां प्रथमोदितानां-
मुपासनास्थापनपूजनानि ।
तत्तत्तिथौ तत्र तुषाररश्मेः
स्युः पूर्णिमायां न कदाप्यमायाम् ॥ ७६ ॥

प्रथमप्रकरण उक्तानां तिथीश्वराणामग्न्यादीनामुपासनादीनि तत्त-त्तिथौ तत्तत्स्वामिकतिथ्यां स्युः ॥ यथा—अग्नेः प्रतिपदि । तत्रापि पञ्च-दश्याः स्वामिनश्चन्द्रस्य पूर्णिमायां स्युः नत्वमावास्यायाम् । इदं च नक्ष-त्रदेवतानामुपलक्षणम् । तथाहि—यस्य देवस्य प्रतिष्ठादि कर्तुमिष्टं त-त्स्वामिके नक्षत्रे मुहूर्ते वा तत्कार्यम् । यथाऽश्विनोरश्विन्याम् ॥

क्रयक्रिया पौष्णशतामिलाश्विनी-
श्रवोभचित्रासु समस्तवस्तुनः ।
द्विदैवपूर्वात्रययाम्यकृत्तिका-
द्विजिह्वसंज्ञेष्वभिधायि विक्रयः ॥ ७७ ॥

रेवतीशततारास्वात्यश्विनीश्रवणचित्रासु समस्तवस्तुनः क्रयकर्म श-स्तम् । विशाखादिसप्तनक्षत्रेषु विक्रयोऽभिधायि कथितः । आगम-शास्त्रस्यानित्यत्वादङ्गामो न विवक्षितः । द्विजिह्व आश्लेषा ॥

अथ विक्रये लग्नशुद्धिमाह—

द्विकोणकेन्द्रेषु शुभैरुपान्त्यषट्-
त्रिगैः खलैः कुम्भमृते स सत्तिथौ ।
न विक्रयर्क्षेषु शुभा क्रयक्रिया
तथा क्रयर्क्षेषु न विक्रयः शुभः ॥ ७८ ॥

द्वितीयनवमपञ्चमप्रथमचतुर्थसप्तमदशमेषु शुभग्रहैः सद्भिः । खलैः पापैरेकादशषष्ठतृतीयगैः सद्भिः कुम्भं ऋते कुम्भलग्नं त्यक्त्वा स वि-क्रयः सत्तिथौ रिक्तामारहिततिथौ कार्यः । अर्धं स्पष्टम् ॥ ननु क्रय-विक्रयनक्षत्राणां भिन्नत्वादेकस्मिन्काले उभयविधमुहूर्तानुपपत्तिरिति चे-त्सत्यम् । तथाऽपि विक्रेत्रा विक्रयमुहूर्ते प्राप्ते विक्रेयवस्तूनि पृथक्क्रि-यन्ते तत्कर्मात्र विक्रयशब्देन विवक्षितम् । क्रेता तु क्रयमुहूर्तप्राप्तौ विक्रेत्रे मूल्यं दत्वा पृथक्कृतं वस्तु गृह्णीयात्तत्कर्म क्रयशब्दवाच्यमिति यथाकथंचित्समाधेयम् ॥

विहाय रिक्ताघटलग्नभूसुतां-
श्लघुध्रुवर्क्षैर्विपणिः समैत्रभैः ।
सिते सितांशौ च तनौ द्विलाभखे
शुभैः खलैर्द्वादशमृत्युवर्जितैः ॥ ७९ ॥

रिक्तातिथिकुम्भलग्नभौमवारान् वर्जयित्वान्येषु तिथ्यादिषु । मैत्रभानि मृगचित्रानुराधारेवत्यः तत्सहितैर्लघुध्रुवभैः । लग्ने शुक्रे चन्द्रे च सति द्वितीयैकादशदशमेषु शुभैः द्वादशाष्टमवर्जितैः पापैः । विपणिः पण्यवीथिकायाः सभनि स्थित्वा क्रयविक्रयाख्यं कर्म ॥ शुभ इति शेषः ॥

मैत्री कार्या मित्रपुष्यभाग्येऽष्टद्वादशे तिथौ ।
सद्वारे तैतिले दैत्यगुरुदृष्टयुते तनौ ॥ ८० ॥

मित्रमनुराधा १ पुष्यः प्रसिद्धः १ भाग्यं पूर्वाफल्गुनी । एषु भेषु । अष्टद्वादशे अष्टम्यां द्वादश्यां च सद्वारे रविभौमशनिभिन्ने वासरे तैतिले चतुर्थकरणे । दैत्यगुरुणा शुक्रेण दृष्टे युते वा लग्ने मैत्री सख्यं कार्यम् ॥

राजाभिषेकमुहूर्तमाह पञ्चभिः—

राजाभिषेकः श्रुतिशाक्रमैत्र-
क्षिप्रध्रुवर्क्षैरुदगुष्णरश्मौ ।
त्यक्त्वाऽऽररिक्ताधिकचैत्ररात्री-
श्चन्द्रेज्यशुक्राभ्युदये विधेयः ॥ ८१ ॥

श्रवणादित्रयोदशनक्षत्रैः । उष्णरश्मौ सूर्ये उदक् उत्तरायणगते सति । आरो भौमः रिक्ता ४।९।१४ अधिको मलमासः चैत्रः प्रसिद्धः रात्रिश्च एतानि त्यक्त्वा शेषेषु वारादिषु । चन्द्रगुरुशुक्रास्तराहित्ये राजाभिषेकः कर्तव्यः ॥

अथ लग्नशुद्धिमाह—

पुष्टैर्भौमार्कलग्नेशादशाजन्मभलग्नपैः ।
सौम्यैः षडष्टान्त्यवर्ज्यैः खलैस्त्र्यायारिगैः शुभः ॥ ८२ ॥

भौमार्कौ प्रसिद्धौ । लग्नेशोऽभिषेकलग्नाधिपः । दशापौ वर्तमानम-हादशान्तर्दशास्वामिनौ । जन्मभलग्नपौ जन्मराशिस्वामी जन्मलग्नस्वामी च तैः पुष्टैः स्वस्थानादिबलयुक्तैः । दशाद्वयं तु जातके प्रसिद्धम् ॥ तथा सौम्यैः शुभग्रहैः षडष्टान्त्यवर्जैः । केन्द्रत्रिकोणायधनत्रिसंस्थैरिति-यावत् । खलैः पापैस्तृतीयैकादशषष्ठगतैः शुभो ज्ञेयः ॥

**लग्नं जन्मभलग्नाभ्यां त्र्यायारिदशमं यदि ।**
**सौम्यैर्दृष्टं युतं श्रेष्ठं स्थिरं शीर्षोदयान्वितम् ॥ ८३ ॥**

यद्यभिषेकलग्नं स्वजन्मराशेः स्वजन्मलग्नाद्वा तृतीयं एकादशं षष्ठं दशमं वा स्यात् । तत्र सौम्यैः शुभग्रहैर्दृष्टं युतं वा श्रेष्ठं ज्ञेयम् । तत्रापि स्थिरं वृषभादि श्रेष्ठम् । न तु चरं कर्कादि । यद्वा शीर्षोदयान्वितं मिथुनकन्यातुलावृश्चिककुम्भानामन्यतमं लग्नं श्रेष्ठम् ॥

अथात्र फलविशेषानाह द्वाभ्याम्—

**स्वान्त्ये नैस्व्यं मृतौ मृत्युर्व्योम्न्यालस्यं तनौ गदः ।**
**पुत्रे पुत्रार्तिरस्ताब्धौ पदच्युतिरसद्ग्रहैः ॥ ८४ ॥**

स्वं द्वितीयं अन्त्यं द्वादशं तत्रस्थितैरसद्ग्रहैः पापैः नैस्व्यं दारिद्र्यं स्यात् । राज्ञ इति शेषः । मृतावष्टमे पापग्रहैर्मृत्युः स्यात् । व्योम्नि दशमे पापैरा-लस्यं निरुद्योगता । तनौ लग्ने गदो रोगः । पुत्रे पञ्चमे पुत्रपीडा । अस्ताब्धौ सप्तमे चतुर्थे च पापैः पदच्युतिरैश्वर्यभ्रंशः । अस्यापवादस्तु चिन्तामणौ—"सर्वं शुभं केन्द्रगतैः शुभग्रहैः" इति ॥

**गुरुः खतुर्ये रविजस्तृतीये**
**रविर्भवेऽसौ चिरराज्ययोग्यः ।**
**धीधर्मलग्नेषु गुरुः कविः खे**
**षष्ठे कुजश्चेदपरोऽपि तद्वत् ॥ ८५ ॥**

खे दशमे चतुर्थे वा गुरुस्तृतीये रविजः शनिः । एकादशे रविः । असौ चिरराज्यकरो योग एकः । धियां पञ्चमे धर्मे नवमे लग्ने वा गु-

स्थेत् । खे दशमे कविः शुक्रश्चेत् । षष्ठे भौमश्चेदयमप्यपरो द्वितीयो योगः तद्वहिस्थिरराज्यकर इत्यर्थः ॥

नृत्तारम्भः पुष्यधात्रम्बुपार्क-
ज्येष्ठावस्वन्त्योत्तरामित्रचान्द्रैः ।
लग्ने सौम्ये सौम्यखेटैश्चतुर्थे
सोमे सौम्यस्यालये सौम्यवारे ॥ ८६ ॥

धाता रोहिणी । अम्बुपः शततारा । उत्तरास्तिस्रोपि । पुष्यादिभिरेतैर्नक्षत्रैः लग्ने सौम्ये बुधे सति चतुर्थे सौम्यखेटैः शुभग्रहैः सद्भिः सौम्यस्य बुधस्यालये गृहे मिथुने कन्यायां वा सोमे चन्द्रे सति तथा सौम्यवारे शुभवासरे नृत्तारम्भः कार्यः ॥

दिव्यं करेन्द्रशततर्क्ष्यदितौ विलग्ने
द्व्यङ्गे चरे सति कवीज्यभचन्द्रशुद्धौ ।
त्यक्त्वा रवीन्दुयुतमष्टममष्टभूत-
विष्ट्यार्किभौमजनिमासभनाडयहनि ॥ ८७ ॥

करो हस्तः । इन्द्रो ज्येष्ठा । शतं शततारा । हरिः श्रवणः । अदितिः पुनर्वसुः । [illegible] भेषु ॥ द्व्यङ्गे द्विस्वभावे मिथुनादौ चरे वा मेषादौ विलग्ने सति । कवीज्यभचन्द्रशुद्धौ शुक्रगुर्वस्तादिशुद्धौ ताराशुद्धौ चन्द्रशुद्धौ च सत्याम् । रवियुक्तं चन्द्रयुक्तं वा जन्मराशेरष्टमं स्थानं त्यक्त्वा । तथाष्टौ अष्टमी भूतश्चतुर्दशी विष्टिर्भद्राकरणं आर्किः शनिवारः भौमो मङ्गलवारः । जनिमासभे जन्ममासो जन्मतारा च । नाडयहनि नाडीनक्षत्राणि 'जन्माद्यं दशमं कर्म' इत्यादिना प्रागुक्तानि । एतानि च त्यक्त्वा दिव्यं तप्तमाषादिरूपं परीक्षेत ॥

अथान्धादि नक्षत्राणि तत्कथनप्रयोजनं चाह त्रिभिः—

अन्धककेकरचिपिटस्वक्षाण्युक्षाणि रोहिणीमुखानि ।
गणनीयानि चतुर्धा सप्तावृत्त्या सहाभिजिता ॥ ८८ ॥

रोहिण्यादीनि ऋक्षाणि नक्षत्राणि अन्धक-केकर-चिपिट-स्वक्षानीति चतुर्धा चतुःप्रकाराणि अभिजिता सह पुनः पुनः सप्तावृत्त्या गणनीयानि । तत्रान्धकं अन्धदृष्टि । केकरं मन्ददृष्टि । चिपिटं मध्यदृष्टि । स्वक्षं सम्पूर्णदृष्टि ॥ यथा—रोहिणी अन्धकम् । मृगशिरः केकरम् । आर्द्रा चिपिटम् । पुनर्वसु स्वक्षम् । एवं पुष्योन्धकम् । आश्लेषाकेकरमित्यादि ॥

अन्धेषु नष्टं धनमाशु लभ्यं
प्रयत्नतः केकरसंज्ञकेषु ।
दूराच्छ्रुतिः स्याच्चिपिटेषु भेषु
स्वक्षेषु नैव श्रवणं न लाभः ॥ ८९ ॥

अन्धनक्षत्रेषु नष्टमपगतं धनं शीघ्रं लभ्यं भवति । केकरसंज्ञकेषु भेषु नष्टं धनं प्रयत्नतो लभ्यम् । चिपिटेषु भेषु दूराच्छ्रुतिः । त्वदीयं द्रव्यममुकेन हृतममुकस्थले तिष्ठतीति दूरतः श्रवणं स्यात् । लब्धिस्तु नास्ति । स्वक्षेषु न श्रवणं नापि लाभः ॥

प्रयाति पूर्वां दिशमन्धकर्क्षै-
स्तद्दक्षिणां केकरसंज्ञकर्क्षैः ।
दिशं प्रतीचीं चिपिटैश्च धिष्ण्यैः
स्वक्षैरुदक्तत्र गवेषणीयम् ॥ ९० ॥

अन्धनक्षत्रैर्नष्टं वस्तु पूर्वां दिशं प्रयाति । उदक् उदीचीम् । तत्र तस्यां दिशि गवेषणीयं मृग्यम् ॥

तीक्ष्णोग्रमिश्रध्रुवपातविष्ट्यां
नष्टं प्रयुक्तं च धनं न लभ्यम् ।
ग्रहार्यमद्वीशजलेन्धकक्षा-
न्नष्टं तु लभ्यं न पुनः प्रयुक्तम् ॥ ९१ ॥

तीक्ष्णादिषड्दारनक्षत्रेषु पाते व्यतीपातयोगे विष्ट्या वा नष्टं चो-

रेण हृत स्वयमेवापगत वा प्रयुक्त वृद्ध्यर्थं दत्त धन न लभ्यम् । तत्र रोहिण्युत्तराफल्गुनीविशाखापूर्वाषाढानां उक्तान्तर्गतत्वेऽप्यधफलत्वादत्र नष्ट ॥ लभ्यमेव प्रयुक्त ॥ न लभ्यमिति विवेक कृत ॥

यमदिग्गमनं मृतस्य दाहः
सदनाच्छादनशय्यकावितानं ।
झषकुम्भगते विधौ सुधीभि-
र्न विधेयस्तृणकाष्ठसङ्ग्रहोऽपि ॥ ९२ ॥

झषकुम्भगते विधौ मीनकुम्भस्थिते चन्द्रे । धनिष्ठोत्तरार्धादिपञ्चनक्षत्रे-
। यमदिग्गमनं दक्षिणदिग्यात्रा न कर्तव्या । तथा—मृ-
विधेयम् । यदि पञ्चक एव दाहप्राप्तिस्तर्हि
ग्रन्थान्तरतो द्रष्टव्यम् । सदना

'लग्नं त्रिपड्दशमलाभगतं विलग्ना-
चन्द्रश्च चेदुपचये शुभदृष्टयुक्तः ॥ ९४ ॥

यदि लग्नाद्द्वादशाष्टमगृहं शुद्धं ग्रहरहितं यदि च जन्मलग्नात्सकाशात्तृतीयः षष्ठो दशम एकादशो वा राशिस्तद्रूपं वर्तमानलग्नं स्यात् त्रिलग्नाच्चोपचये त्रिपड्दशायेषु चन्द्रः शुभग्रहैर्दृष्टो युक्तो वा तदा सर्वकर्मसु लग्नशुद्धिरुक्ता ॥

अधोर्ध्वमुखादिनक्षत्राण्याह द्वाभ्याम्—

ऊर्ध्वास्यानि ध्रुवार्द्रेज्यवसुहर्यम्बुपानि च ।
तिर्यङ्मुखानि स्वात्यर्कादित्येन्द्राश्विमृदूनि च ॥ ९५ ॥
अधोमुखानि मूलाहिक्रूरसाधारणानि च ।
तत्र तत्र क्रियाः कुर्यादूर्ध्वतिर्यगधोमुखीः ॥ ९६ ॥

ध्रुवादीनि नवोर्ध्वमुखानि । तत्र हरिः श्रवणः । अम्बुपं शततारा । स्वात्यादीनि नव तिर्यङ्मुखानि । तत्रादित्यं पुनर्वसुः । मूलादीनि नवाधोमुखानि । अहिराश्लेषा । क्रूराणि तिस्रः पूर्वाः भरणी मघा च । साधारणं विशाखा कृत्तिका चेति । तत्र तत्रोर्ध्वमुखादिषु क्रमादूर्ध्वमुखीस्तिर्यङ्मुखीरधोमुखीश्च क्रियाः कुर्यात् । तत्रोर्ध्वमुखकर्माणि राजाभिषेकादीनि । तिर्यङ्मुखकर्माणि बीजवापनादीनि । अधोमुखकर्माणि कूपखननादीनि ॥

अथ शवप्रतिकृतिदाहे कालशुद्धिमाह चतुर्भिः—

दाहं पर्णशरादेर्गुरुशशिरविसौम्यवारेषु ।
नन्दामदनचतुर्दशदर्शविहीने तिथौ कुर्यात् ॥ ९७ ॥

गुरुसोमरविबुधवारेषु । नन्दाः प्रतिपत्षष्ठ्येकादश्यः मदनस्त्रयोदशी चतुर्दशी चतुर्दशी दर्शोऽमावास्या एतद्विहीने तिथौ । द्वितीयादितिथिषु पर्णशरादेर्दाहं कुर्यात् । पर्णशरः पालाशवृन्तादिभिः प्रतिकृतिकल्पनम् । आदिशब्दादस्थिग्रहः ॥

तीक्ष्णोग्रान्त्यशतर्क्षं त्रिपुष्करं मौढ्यपातपरिघसितान् ।
भद्रावैधृत्यधिकान् हित्वा याम्यायनं च वर्षोर्ध्वम् ॥ ९८॥

तीक्ष्णानि आर्द्राश्लेषाज्येष्ठामूलानि । उग्राणि मघाभरण्यौ पूर्वात्रयं च । अन्त्यं रेवती । शतर्क्षं शततारा । एतानि हित्वा । तथा त्रिपुष्करं प्रागुक्तं योगविशेषम् । मौढ्यं गुरुशुक्रयोरस्तम् । पातौ व्यतीपातमहापातौ । परिघं एकोनविंशं योगम् । सितं शुक्लपक्षम् । भद्रां विष्टिम् । वैधृतिं सप्तविंशं योगम् । अधिकं मलमासमेतांश्च हित्वा वर्षादूर्ध्वं तु याम्यायनं च हित्वा पर्णशरादेर्दाहं कुर्यात् ॥ द्विविधो हि प्रेतसंस्कारः । प्रत्यक्षशरीरस्यैकः प्रतिकृतेरन्यः । तत्र प्रत्यक्षशरीरसंस्कारे दिननिचारो नास्त्येव । प्रतिकृतिसंस्कारे तु कालत्रयम् । आशौचमध्ये वर्षमध्ये वर्षादूर्ध्वं चेति । तत्राशौचमध्ये यथासम्भवं दिनं शोध्यम् । आशौचविनिवृत्तौ तु संशोध्यैव दिनं ग्राह्यम् । वर्षादूर्ध्वं याम्यायनमपि निषिद्धम् । वर्षमध्ये तु याम्यायनेऽपि दाहः कार्य इत्यर्थः ॥

तत्रोत्तमोऽर्कशशभृद्गुरुषु मरुत्करहयश्रवोगुरुषु ।
मध्यो बुधे विशाखाध्रुवभगमित्रादितिद्विपादेषु ॥ ९९ ॥

तत्र रविशशिगुरुवारेषु । स्वातीहस्ताश्विनीश्रवणपुष्यनक्षत्रेषु । पर्णशरादीनां दाहः श्रेष्ठः । बुधवारे विशाखाद्येकादशनक्षत्रेषु मध्यमः । तत्र भगः पूर्वाफल्गुनी । द्विपादानि चित्राधनिष्ठामृगशीर्षाणि ॥

चन्द्रेऽष्टतुर्यव्ययगे जन्मप्रत्यरितारयोः ।
कर्तुः पर्णशरादीनां कृतो दाहस्तदाधमः ॥ १०० ॥

कर्तुर्जन्मराशेरष्टमचतुर्थद्वादशराशिगते चन्द्रे सति तथा जन्मतारायां कर्तुर्जन्मनक्षत्रे दशमैकोनविंशनक्षत्रे च प्रत्यरितारायां जन्मभात्पञ्चमचतुर्दशत्रयोदशनक्षत्रे पर्णशरादीनां दाहः कृतस्तर्हि अधमो ज्ञेयः॥

कालान्तरगतामूनां कृता चेचोत्तरक्रिया ।
कर्तव्या क्षिप्रमूलार्द्राश्रोत्राश्लेषेन्दुवायुषु ॥ १०१ ॥

मृतानां श्राद्धाद्युत्तरक्रिया कारणवशाद्दाहसमये न कृता चेत्तर्हि कालान्तरे क्षिप्रादिनक्षत्रेषु कर्तव्या । श्रोत्र श्रवणः । इन्दुर्मृगः ॥

त्रिपुष्कराख्ये मरणं नराणां
द्विपुष्कराख्येऽपि शुभाय न स्यात् ।
भवेत्कदाचिद्यदि दैवयोगा-
द्गवां प्रदद्यात्त्रितयं द्वयं वा ॥ १०२ ॥

त्रिपुष्करे गवां त्रयं दद्यात् । द्विपुष्करे गोद्वयं दद्यात् । शेषं स्पष्टम् ॥

कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।
रघुनाथो मुहूर्तानां प्रकीर्णानां निरूपणम् ॥ १०३ ॥

इति श्रीचित्तपावनजातीयशाण्डिल्यकुलमण्डनज्योतिर्वित्सरसात्मजरघुनाथकविकण्ठीरवविरचितायां मुहूर्तमालायां प्रकीर्णप्रकरणम् ॥ ३ ॥

स्पष्टम् ॥

इति सुखस्थानकरोपाह्वभट्टरामचन्द्रसुतश्रीमन्महेश्वरभट्टरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां प्रकीर्णप्रकरणं तृतीयम् ॥ ३ ॥

---

## सङ्क्रान्तिप्रकरणम् ४

अथ सङ्क्रान्तिप्रकरणं व्याख्यायते । तत्र सङ्क्रान्तिलक्षणमाह—

पूर्वं परित्यज्य यदा ग्रहाणां
राशिं परम्प्रत्ययनं स कालः ।
सङ्क्रान्तिवाच्योऽयमतिप्रशस्तः
स्नाने च दाने च रवेर्विशेषात् ॥ १ ॥

यदा यस्मिन्काले पूर्वं राशिं परित्यज्य परं राशिंप्रति ग्रहाणां सूर्यादीनां गमनं स कालः सङ्क्रान्तिशब्दवाच्यः । अयं सङ्क्रान्तिकालः स्नाने दाने चातिप्रशस्तः । तत्रापि रवेः सङ्क्रान्तिर्विशेषादतिप्रशस्ता ज्ञेया ॥

अथ शुभाशुभवारपरत्वेन सङ्क्रान्तिफलमाह—

**शुभवारे नृपक्षेमं सुभिक्षं पापसङ्क्षयः ।**
**क्रूरवारेऽर्कसङ्क्रान्ताववृष्ट्यामयसङ्गराः ॥ २ ॥**

शुभवारेऽर्कसङ्क्रान्तौ सत्यां नृपक्षेमादीनि फलानि स्युः । पापानां विधर्मिणां सङ्क्षयः । तत्रापि गुरुवारे नृपक्षेमं शुभवारे सुभिक्षं सोमवारे पापसङ्क्षयः बुधवारे त्वनामयमध्याहार्यम् । क्रूरवारे भौमशनिरविवासरेषु क्रमादवृष्ट्यादयः स्युः । आमयो रोगः । सङ्गरो युद्धम् । एतच्च तत्तत्सङ्क्रान्तिमासे ज्ञेयम् ॥

अथ वारवशेन तस्याः संज्ञाविशेषानाह—

**सङ्क्रान्तिरर्कस्यार्कादौ घोरा ध्वाङ्क्षी महोदरी ।**
**मन्दाकिनी तथा मन्दा मिश्रा राक्षस्यनुक्रमात् ॥ ३ ॥**

अर्कस्य सङ्क्रान्तिरर्कादिवारे क्रमेण घोरादिसंज्ञिका स्यात् । यथा रवौ घोरा । सोमे ध्वाङ्क्षी । भौमे महोदरी । बुधे मन्दाकिनी । गुरौ मन्दा । भृगौ मिश्रा । शनौ राक्षसी ।

**उग्रक्षिप्रचरमृदुध्रुवमिश्रभदारुणैः ।**
**घोराद्या वा रवौ ध्वाङ्क्षी घोरा वाब्जे महोदरी ॥ ४ ॥**

उग्रादिनक्षत्रयुक्ते काले सूर्यसङ्क्रान्तिः क्रमाद्घोरादिनाम्नी स्यात् । यथा उग्रे घोरा । क्षिप्रे ध्वाङ्क्षी । चरे महोदरी । मैत्रे मन्दाकिनी । ध्रुवे मन्दा । मिश्रे मिश्रा । तीक्ष्णे राक्षसी ॥ रवौ सोमे च मतान्तरमाह—रवाविति । अब्जे सोमे ॥

अथ क्रमेणैतत्फलान्याह—

**शूद्रविट्चोरभूपालविप्रपश्वन्त्यजान् क्रमात् ।**
**सुखयत्य पुण्याः प्राक् पश्चाच्चाड्यस्तु षोडश ॥ ५ ॥**

घोरा शूद्रान् सुखयति । ध्वाङ्क्षी वैश्यान् सुखयति । महोदरी चौरानित्यादि यथाक्रमम् ॥ अथ सङ्क्रान्तौ साधारण्येन पुण्यकालपरिमा-

णमाह—अथेति । गणितमार्गेण यः सूर्यसङ्क्रमकाल आगतस्ततः प्राक् षोडश पश्चाच्च षोडश घटिकाः पुण्याः। स्नानदानादिना पुण्यसम्पादिका इत्यर्थः ॥

विषुवं तौलयजे विष्णुपदं कुम्भालिगोहरौ ।
धनुःकन्यानृयुङ्मीने षडशीतिमुखं रवौ ॥ ६ ॥

तौलिस्तुला अजो मेषः । अत्र रवौ सति तत्सङ्क्रमणं विषुवसंज्ञम् । एवं कुम्भवृश्चिकवृषसिंहगते रवौ विष्णुपदसंज्ञं सङ्क्रमणम् । धनुःकन्यामिथुनमीनगे रवौ षडशीतिमुखसंज्ञम् ॥

स्याद्दक्षिणायनं कर्के मकरे तूत्तरायणम् ।
मध्यमाद्योत्तराद्योर्ध्वाः पुण्या नाड्यो यथाक्रमम् ॥ ७ ॥

कर्कस्थे रवौ दक्षिणायनं सङ्क्रमणम् । मकरस्थे तु उत्तरायणसंज्ञम् ॥ क्रमेण विषुवादिषु अतिपुण्यदा घटीराह—मध्यमेति । यथा—विषुवे मध्यमाः सङ्क्रान्तिकालात्प्रागष्टौ पश्चादष्टाविति षोडश घट्योऽतिपुण्याः । विष्णुपदे आद्याः षोडश पुण्याः । अग्रिमास्तु तथा न भवन्ति । षडशीतिमुखे उत्तराः षोडश पुण्याः । दक्षिणायने त्वाद्याः । उत्तरायणे तु परा इति ॥

अथ दिनरात्रिविभागेन सङ्क्रान्त्यशुभफलमाह द्वाभ्याम्—

दिनस्य प्रथमे त्र्यंशे नृपतीन् मध्यमे द्विजान् ।
वैश्यान् तृतीये सूर्यास्ते शूद्रान् प्रातस्तु लिङ्गिनः ॥ ८ ॥
रात्रेश्चतुर्षु यामेषु पिशाचान् राक्षसान्नटान् ।
आभीरानर्कसङ्क्रान्तिः क्रमाद्धन्ति न शान्तितः ॥ ९ ॥

दिनमाने त्रिभिर्भक्ते त्र्यंशो भवति । तत्र प्रथमे त्र्यंशेऽर्कसङ्क्रान्तिर्नृपतीन् हन्ति । द्वितीये त्र्यंशे ब्राह्मणान् । तृतीये त्र्यंशे वैश्यान् । सूर्यास्तसमये शूद्रान् । सूर्योदयसमये लिङ्गिनः पाखण्डान् । "पाखण्डाः सर्वलिङ्गिनः" इत्यभिधानात् । रात्रेः प्रथमप्रहरे पिशाचान् ।

द्वितीयप्रहरे राक्षसान् तृतीयप्रहरे नर्तकान् चतुर्थप्रहरे पशुपालान् हन्ति । शान्तितः दानादिशान्तौ कृतायां न हन्ति ॥

अथ जन्मनक्षत्रवशेन फलमाह—

**स्वभे सङ्क्रान्तिपूर्वर्क्षात् त्रिके षट्के मुहुः फलम् ।**
**क्रमाद्गतिसुखास्वास्थ्यं वस्त्रार्तिरधनं धनम् ॥ १० ॥**

सङ्क्रान्तिर्यस्मिन्नक्षत्रे स्यात् ततः पूर्वनक्षत्रात् त्रिके त्रये स्वजन्मनक्षत्रं चेत्तदा गतिः फलम् । ततः षट्के सुखम् । ततस्त्रिकेऽस्वास्थ्यं शारीरपीडा । ततः षट्के वस्त्रार्तिः । ततस्त्रिकेऽधनं दारिद्र्यम् । ततः षट्के धनम् । यथा—रोहिण्यां सङ्क्रमे कृत्तिकादित्रये स्वभं चेद्गतिः । तत आर्द्रादिषट्के सुखम् । एवमुत्तरत्र ॥

अथ कीदृशो रविः सङ्क्रमते तं तत्फलं चाह द्वाभ्याम्—

**सुप्तः सङ्क्रमतेऽर्कश्चतुष्पदे तैतिले नागे ।**
**गरपञ्चके निविष्टस्तिष्ठन् किंस्तुघ्नकौलवे शकुनौ ॥ ११ ॥**
**संविष्टोऽनिष्टफलं नेष्टमनिष्टं निविष्टोऽर्कः ।**
**श्रेष्ठं तिष्ठन् कुरुते वृष्टौ सृष्टौ च धान्यानाम् ॥ १२ ॥**

चतुष्पदतैतिलनागाख्यकरणेषु रविः सुप्तः सङ्क्रमते राश्यन्तरं गच्छति । गरवणिजभद्रावबबालवेषु निविष्ट उपविष्टः सङ्क्रमते । शेषेषु तिष्ठन् सङ्क्रमते । संविष्टः सुप्तः वृष्टौ धान्यानां सृष्टौ चानिष्टं फलं कुरुते । वृष्ट्यभावं महर्घतां च करोतीत्यर्थः । निविष्टोऽर्क इष्टमनिष्टं च न किंतु मध्यमं फलं कुरुते । श्रेष्ठमिष्टम् ॥

अथाधिमासक्षयमासयोर्लक्षणमाह—

**चान्द्रोऽधिमासोऽसङ्क्रान्तः क्षयमासो द्विसङ्क्रमः ।**
**अधिमासं त्यजेच्चान्द्रं क्षयमासं तु सावनम् ॥ १३ ॥**

शुक्लप्रतिपदादिदर्शान्तश्चान्द्रो मासः स चेदसङ्क्रान्तः स्पष्टसङ्क्रान्त्या रहितस्तदाधिमास उक्तः । स चान्द्रो मासो द्विसङ्क्रमः द्वौ सङ्क्रमौ

यस्मिन्नसौ क्षयमाससंज्ञकः—"आद्यन्तदर्शयोर्मध्ये भानोरेव तयोर्यदा । सङ्क्रान्तिद्वितयं चेत्स्यात्क्षयमासः स उच्यते ॥", इति वसिष्ठोक्तेः । क्षयमासस्तु कार्तिकादित्रये पतति नान्यत्र । ततः प्राक् पश्चाच्चाधिमासौ नियमेन भवतः । "क्षयः कार्तिकादित्रये नान्यथा स्यात्तदा वर्षमध्येऽधिमासद्वयं च" इत्युक्तेः । स कदा स्यादिति चेदुच्यते । "प्रागासीत्क्षयमासस्तु राम-खाष्टि १६०३ मिते शके । वेदार्णवाऽत्यष्टिमिते १७४४ भावी खाष्टधृता १८८० वपि ॥" इति । त्यागे विशेषमाह—अधिमासमिति । सायनं त्रिंशद्दिनात्मकं त्यजेत् । यात्रादिकृत्येष्विति शेषः ॥

रवेः सङ्क्रमर्क्षात्परं सङ्क्रमर्क्षे
द्वितीयं तृतीयं सुभिक्षं ततः स्यात् ।
महर्घं यदा पञ्चमं वा चतुर्थं
भवेत्पष्ठमसन्तदुर्भिक्षहेतुः ॥ १४ ॥

स्पष्टम् ॥

समं क्षिप्रकर्णत्रिपूर्वाश्रविष्ठा-
मघामित्रचित्रान्त्यमूलाग्निचान्द्रम् ।
बृहद्धं विशाखाध्रुवादित्यमाङ्कु-
र्जघन्यं शताहीन्द्रयाम्याशुगेशम् ॥ १५ ॥

क्षिप्रादीनि पञ्चदश भानि समाख्यानि । तत्र श्रविष्ठा धनिष्ठा । विशाखादीनि षट् बृहत्संज्ञानि । आदित्यं पुनर्वसुः । शततारादीनि षट् जघन्यानि । आशुगः स्वाती ॥

अथ सङ्क्रमणकालमानमाह—

क्रमान्मुहूर्ताः खगुणाः शराब्धय-
स्तिथ्यः समार्द्धा रविसङ्क्रमे सति ।
समं समर्घं क्रमशोऽतिदुर्लभं
धान्यं वदेदित्यमपीन्दुदर्शने ॥ १६ ॥

समादिनक्षत्रे रविसङ्क्रमणे सति क्रमादेते सङ्क्रमणस्य मुहूर्ता ज्ञेयाः। यथार्कसमसंज्ञके नक्षत्रेऽसङ्क्रान्तौ खगुणास्त्रिशन्मुहूर्ताः। बृहन्नक्षत्रे शराब्धयः पञ्चचत्वारिंशत्। जघन्यभे तिथ्यः पञ्चदश मुहूर्ताः। फलमाह—सममिति। त्रिंशन्मुहूर्तायां सङ्क्रान्तौ सर्वं धान्यं समम्। न महार्घं नापि समर्घमित्यर्थः। पञ्चचत्वारिंशन्मुहूर्तसङ्क्रान्तौ समर्घम्। पञ्चदशमुहूर्तायां सङ्क्रान्तौ महार्घं दुष्प्रापम्। इत्थं चन्द्रदर्शनेऽपि वदेत्। अयमर्थः। समभे चन्द्रदर्शने साम्यम्। बृहद्भे चन्द्रदर्शने समर्घम्। जघन्यभे महार्घमिति॥

अथ सङ्क्रमसमयोत्पन्नं वृष्टेः फलमाह सार्धेन—

**क्रियमीनकर्ककन्याऽर्कसङ्क्रमे सर्वसौख्यदा वृष्टिः।**
**घटसिंहचापमिथुने वृष्टिरघं करोति भूपृष्ठे॥ १७॥**
**वृष्टिस्तुलगोलिमृगे तस्कररोगाग्निदुर्भिक्षम्।**

क्रियो मेषः। शेषं स्पष्टम्॥ तुलावृषवृश्चिकमकरसङ्क्रमकाले वृष्टि-स्तस्करादिकं क्रमेण करोतीत्यर्थः॥

योगवशेन पुण्याधिकमाह—

**सितपक्षे सप्तम्यां सङ्क्रान्तिः सूर्यपर्वतोऽप्यधिका॥ १८॥**

सितेति॥

**अर्धोदितास्तात्प्रागूर्ध्वं सन्ध्यार्काद्घटिकात्रयम्।**
**परपूर्वे दिने पुण्ये तत्र याम्योत्तरे रवौ॥ १९॥**

अर्कादर्धोदितादर्धास्ताच्च क्रमात्प्रागूर्ध्वं घटिकात्रयं सन्ध्याकालः स्यात्। अर्धोदितादर्कबिम्बात् प्राक् त्रिनाडीमिता प्रातःसन्ध्या। तथाऽर्धास्तादुपरि त्रिनाडीमिता सायंसन्ध्येत्यर्थः। एतत्प्रयोजनमाह—परेति। यदि प्रातःसन्ध्यायां याम्यायनप्रवृत्तिः। तदा सूर्योदयानन्तरं सम्पूर्णमहः पुण्यम्। यदि सायंसन्ध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं सम्पूर्णमहः पुण्यकाल इत्यर्थः। अनन्तरवचनस्यापवादोऽयम्॥

**अर्को यदा सङ्क्रमते च नक्त-**
**मस्तात्परस्तात्परमेव पुण्यम्।**

अर्कोदयात्प्राग्यदि कर्कमर्कः
प्रयाति पूर्वं दिनमत्र पुण्यम् ॥ २० ॥

यदा रविरस्तादुपरि नक्रं मकरं सङ्क्रमते तदोत्तरमेव दिनं पुण्यं न तु पूर्वम् । यद्यर्कोदयात्पूर्वमर्कः कर्कं प्रयाति तदा पूर्वमेव दिनं पुण्यं नोत्तरम् ॥

यद्यर्धरात्रेण समे समये रविसङ्क्रमः ।
दिनद्वयं तदा पुण्यमगण्यं तत्र यत्कृतम् ॥ २१ ॥

अर्धरात्रेण समे पूर्णनिशीथाभिन्ने समये रविसङ्क्रमणं चेत्तदा पूर्वं परं च दिनं पुण्यम् । तत्र स्नानदानादिकृतं सुकृतमगण्यं भवति ॥

यद्यर्धरात्राद्रविसङ्क्रमोऽर्वा-
क्पुण्यं तदा पूर्वदिनोत्तरार्धम् ।
परत्र चेदुत्तरवासरस्य
पूर्वं दलं पुण्यमिति ब्रुवन्ति ॥ २२ ॥

यद्यर्धरात्रात् प्राक् रविसङ्क्रान्तिस्तदा पूर्वदिनस्योत्तरार्धे पुण्यम् । यद्यर्धरात्रादुपरि सङ्क्रान्तिस्तदोत्तरदिनस्य पूर्वार्धमेव पुण्यमिति वदन्ति मुनयः ॥

विषुवायनयोः पूर्वं परं मध्यं दिनत्रयम् ।
सजेत्प्रागूर्ध्वमन्यत्र घटीः षोडश षोडश ॥ २३ ॥

विषुवं तुलामेषसङ्क्रमौ । अयनं कर्कमकरौ । तत्र पूर्वोत्तरमध्यलक्षणं दिनत्रयं त्यजेत् । शुभकर्मणीति शेषः । अन्यत्र वृषभादिसङ्क्रमेषु पूर्वं षोडश पश्चाच्च षोडश घटीस्त्यजेदित्यर्थः ॥

सङ्क्रान्तिघटिकास्त्याज्याः सूर्यादीनामनुक्रमात् ।
दन्ता द्वे नव षट् नागवसवो नव खाऽष्टयः ॥ २४ ॥

सूर्यादीनां क्रमेण शुभकर्मसु एताः सङ्क्रान्तिघट्यस्त्याज्याः । यथा— रवेः सङ्क्रान्तौ दन्ताः ३२ चन्द्रस्य सङ्क्रान्तौ द्वे २ भौमस्य नव ९

बुधस्य षट् ६ गुरोर्नागवसवः ८८ भृगोर्नव ९ शनेः खाङ्गचन्द्राः १६० । अत्र रवेर्विषुवायनेषु विशेषः पूर्वश्लोके उक्त एव ॥

अथ सायनांशसङ्क्रान्तिमाह—

**अथायनांशाः षष्टिघ्नाः स्पष्टार्कगतिभाजिताः ।**
**पुण्यदा चलसङ्क्रान्तिः प्राक् सङ्क्रान्तेर्दिनादिना ॥ २५ ॥**

'मेषादिषु स्थितवतः' इत्यादिना प्रागुक्तया स्पष्टरविगत्या अयनांशाः षष्ट्या गुणिताः स्पष्टरविगत्या भाजिताः कार्याः । लब्धैर्दिनघटीपलैर्मेषादिसङ्क्रान्तेः प्राक् चलसङ्क्रान्तिर्भवति । सा अपदानादौ बहुपुण्यदा ज्ञेया । अत्र मकरव्यतिरिक्तैकादशसङ्क्रान्तिषु प्रागुक्तरीत्या मुख्यसङ्क्रमकालवत् पुण्यकाला ज्ञेयाः । मकरे तु पूर्वा विंशतिर्घटिकाः पुण्याः । निरयनमकरे तु परा विंशतिः पुण्याः । अयनांशा रविगतिश्च कथिता द्वितीयप्रकरणे ॥

**वृष्टेर्विशोपकाः कर्कसङ्क्रमेऽर्कादिवारतः ।**
**दिङ्नखाष्टार्कधृत्यष्टादशपञ्चाधिकाः शुभाः ॥ २६ ॥**

सूर्यादिवारेषु कर्कसङ्क्रान्तौ सत्यां क्रमादेते वृष्टेर्विशोपका ज्ञेयाः । यथा—रविवारे दश । सोमे विंशतिः । भौमेऽष्टौ । बुधे द्वादश । गुरावष्टादश । भृगौ च तथा । शनौ पञ्च ॥ फलमाह—अधिकाः शुभाः । तद्यथा—शनिवारे कर्कसङ्क्रान्तौ विशोपकानां स्वल्पसंख्यत्वादशुभत्वम् । सोमवारे सर्वाधिकसंख्यत्वाद्वृष्टिरत्यन्तशुभा । एवं रविभौमादौ संख्यानुसारेण फलमूह्यम् ॥

**पञ्चकं ग्रहणहोलिकायन-**
**मेतदाहविधिभावुकादिनम् ।**
**तत्परं च करिसंज्ञकं दिनं**
**गर्हितं सकलकर्मसूभयम् ॥ २७ ॥**

ग्रहणं चन्द्रसूर्योपरागः । होलिकादिनं फाल्गुनपूर्णिमा । अयनं

.कर्कमकरसङ्क्रमणम् । प्रेतदाहविधिः शवसंस्कारस्तद्दिनम् । भावुका वैशाखामावास्या तद्दिनं चैत्येतत्पञ्चकसंज्ञकं ज्ञेयम् । तत्परं तस्मात्पञ्चकादुत्तरं दिनं करिसंज्ञकं ज्ञेयम् । तदुभयं यात्रादिकर्मसु निन्द्यम् ॥

अथ रविसङ्क्रान्तेर्बवादिकरणवशेन वाहनादीन्याह सप्तभिः—

सिंहो व्याघ्रः सूकरो रासभश्च
इस्ती वाहद्विट् तुरङ्गस्तथा श्वा ।
मेषो गौर्वा कुक्कुटः सङ्क्रमेषु
ज्ञेयान्युष्णांशोर्बवाद्वाहनानि ॥ २८ ॥

उष्णांशोः सूर्यस्य सङ्क्रमेषु बवात् बवमारभ्यैकादशकरणेषु क्रमादेतानि वाहनानि स्युः । तत्र रासभो गर्दभः । वाहद्विट् महिषः । श्वा कुक्कुरः । गौर्वृषः ॥

देवभूताऽहिविहगपश्वेणद्विजवाहुजाः ।
वैश्यः शूद्रः सङ्करजो जातयः स्युर्बवाद्रवेः ॥ २९ ॥

रवेः रविसङ्क्रान्ते बवमारभ्य जातयः स्युः । अहिः सर्पः । पशुर्वृषः । एणो मृगः । सङ्करजोऽनुलोमजप्रतिलोमजरूपः ॥

श्वेतं पीतं च हरितं पाण्डु रक्तं च मेचकम् ।
धूम्रं चित्रं कम्बलो दिक् घनाभं बवतोंऽशुकम् ॥ ३० ॥

पीतं हरिद्राभम् । हरितं पालाशम् । पाण्डु श्वेतरक्तम् । रक्तमलैक्तकवर्णम् । मेचकं श्यामम् । धूम्रं धूम्राभम् । दिक् वस्त्राऽभावः । घनाभं मेघवर्णम् । एतद्बवमारभ्य सङ्क्रान्तेरंशुकं वस्त्रम् ॥

क्रमादन्नं पायसं साज्यैक्ष्यापूपपयोदधि ।
चित्रान्नगुडमध्वाज्यसिता भक्ष्यं बवाद्रवेः ॥ ३१ ॥

बवाद्रवेर्भक्ष्यमेतत्क्रमात्स्यात् । भैक्ष्यं भिक्षासमूहः । अपूपः तैलपक्वभेदः । चित्रान्नं हरिद्रादिरञ्जितम् । सिता शर्करा ॥

---

१ भावुका ज्येष्ठादेवीति प्रसिद्धा तत्पूजनदिनं चैत्येतदित्येवंरूपं टीकायां पाठान्तरं पुस्तकान्तर उपलभ्यते । २ लाक्षारसः अलिता इति भाषायां प्रसिद्धः ।

लेपो मृगमदकुङ्कुमचन्दनमृद्रोचनाऽलक्तम् ।
ओतुमदोऽथ हरिद्रा कज्जलमगरुः सितांशुको ववतः ॥३२॥

ववतः ववमारभ्य मृगमदादिलेपो ज्ञेयः । मृगमदः कस्तूरी । मृत् मृत्तिका । रोचनं गोरोचनम् । अलक्तो लाक्षारसः । ओतुमदो वनमार्जारघर्मः । सितांशुकः कर्पूरः ॥

पुन्नागजातीवकुलाख्यकेतकी-
बिल्वार्कदूर्वाजलजन्ममल्लिकाः ।
क्रमाद्ववात्पाटलिका जपाभिधा
पुष्पाणि भानोः कथितानि सङ्क्रमे ॥ ३३ ॥

ववमारभ्य भानोः सङ्क्रमे पुष्पाणि कथितानि । पुन्नागं नागकेसरपुष्पम् । जलजन्म कमलम् ॥

भृशुण्डिकागदाखड्गदण्डकार्मुकतोमराः ।
कुन्तपाशाङ्कुशास्त्राणि बाणोऽर्कस्यायुधं ववात् ॥ ३४ ॥

स्पष्टम् ॥

कश्चिद्वयोऽवस्था उक्ताः—"शिशुः कुमारी च गतालका युवा प्रौढा प्रगल्भा च ततश्च वृद्धा । वन्ध्यातिवन्ध्या च सुतार्थिनी च प्रव्राजिका चेति ववादितो वयः ॥" इति ॥

सङ्क्रान्तितारायाः पत्युर्यानं तत्स्याद्रवेरपि ।
खश-वाह्लीक-वंगेषु परत्र करणोद्भवम् ॥ ३५ ॥

यस्मिन्नक्षत्रे सङ्क्रान्तिस्तदधिपतेर्यद्वाहनं तद्रविसङ्क्रान्तेरपि खशादिदेशत्रये वाहनं भवेत् । अन्यस्मिन् देशे तु ववादिकरणोद्भवमेवेत्यर्थः ॥

तच्चनाशः सङ्क्रमे तीक्ष्णरश्मे-
र्नाशस्तत्तज्जीविनां मानवानाम् ।
अपूर्वद्रव्यं भोजयेद्विप्रवर्गा-
न्कृत्वा शान्तिं सौम्ययाम्ये विशेषात् ॥ ३६ ॥

तीक्ष्णरश्मेः सूर्यस्य सङ्क्रमे यानि वस्त्राशनवाहनादीन्यभिहितानि तत्तन्नाशो ज्ञेयः । तत्तद्वस्त्रादिना ये जीवन्ति तेषां मानवानां च नाशः फलम् । अत आयुषो वृद्ध्यै शान्तिं कृत्वा ब्राह्मणान् भोजयेत् । एतच्च धर्ममकरसङ्क्रमे आवश्यकमित्यर्थः ॥

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।**
**रघुनाथोऽर्कसङ्क्रान्तिशुभाऽशुभनिरूपणम् ॥ ३७ ॥**

स्पष्टम् ।

इति मुखठाणकरोपाह्वभट्टरामचन्द्रसुतमहेश्वरभट्टविरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां सङ्क्रान्तिप्रकरणं चतुर्थम् ।

---

## गोचरप्रकरणम् ५

अथ गोचरप्रकरणं व्याख्यायते । तत्र गोचरशब्देन ग्रहचार उच्यत इत्याह—

**गौरादित्यस्तस्य चारचन्द्रादेरुपलक्षणात् ।**
**तत्फलं गोचरफलं ग्रहा यच्छन्ति जन्मभात् ॥ १ ॥**

गोशब्देनादित्य उच्यते तस्य चरश्चार उपलक्षणादजहल्लक्षणया चन्द्रादेरपि चारो लक्ष्यते । एवमादित्यादिग्रहचारफलं गोचरफलम् । तत्तु जन्मराशेः सकाशात् ग्रहा यच्छन्ति ददति ॥

तत्रादौ रविचारफलमाह—

**सूर्यः स्थानविनाशं भयं श्रियं मानहानिमथ दैन्यम् ।**
**विजयं मार्गं पीडां सुकृतिहतिं सिद्धिमायमथ हानिम् ॥२॥**

जन्मराशिस्थः सूर्यः स्थानविनाशं करोति । जन्मभाद्द्वितीयो भयं करोति । तृतीयः श्रियम् । एवं क्रमेण सर्वत्र जन्मभात्करोति । इति चतुर्थगतेनान्वयः । आयो लाभः ॥

चन्द्रचारफलमाह—

चन्द्रोऽन्नमधनं सौख्यं रोगं कार्यक्षतिं श्रियम् ।
स्त्रियं मृत्युं नृपभयं सुखमायं व्ययं क्रमात् ॥ ३ ॥

अधनं दारिद्र्यम् । कार्यक्षतिं कार्यनाशनम् । स्त्रियं स्त्रीसौख्यम् । मृत्युं तत्तुल्यं रोगादिदुःखम् ।

भौमचारफलमाह—

भौमोऽरिभीतिं धननाशमर्थं
भयं तथार्थक्षयमर्थलाभम् ।
धनात्ययं शत्रुभयं च पीडां
शोकं धनं हानिमनुक्रमेण ॥ ४ ॥

अरिभीतिं शत्रुतो भयम् । अर्थं धनम् । धनात्ययं धननाशम् ।—

बुधस्तु बन्धं धनमन्यभीतिं
धनं जयं स्थानमथात्मपीडाम् ।
अर्थं रुजं सौख्यमथार्थलाभ-
मर्थक्षतिं जन्मग्रहात्करोति ॥ ५ ॥

अन्यभीतिं परतोभयम् । आत्मपीडां मनःक्लेशम् । रुजं रोगम् ॥

गुरुर्भयं धनं क्लेशं धननाशं सुखं शुचम् ।
मानं रोगं सुखं दैन्यं लाभं पीडां च जन्मभात् ॥ ६ ॥

शुचं शोकम् । मानं सत्कारम् । दैन्यं दारिद्र्यम् ॥

कविः शत्रुनाशं धनं सौख्यमर्थं
सुतासिं रिपोः नाशमं शोकमर्थम् ।
गृहद्रव्यलाभं विपत्तिं धनाप्तिं
धनाप्तिं वनोत्पातमनो जन्मराशेः ॥ ७ ॥

सुतार्ति पुत्रलाभम् । रिपोः साध्वसं शत्रुतो भयम् । वृहद्वस्त्रलाभं महावस्त्रप्राप्तिम् ॥

सर्वनाशं शनिर्वित्तनाशं धनं
शत्रुवृद्धिं तथाऽर्थक्षतिं च श्रियम् ।
दोषसङ्घं रुजं द्रव्यनाशं तथा
दौर्मनस्यं धनं बहनर्थं क्रमात् ॥ ८ ॥

शनिरेवं फलं तनोति । तत्र अर्थक्षतिं धनक्षयम् । दौर्मनस्यं वैमनस्यम् ॥

राहुर्हानिं तथा नैस्व्यं धनं वैरं शुचं श्रियम् ।
कलिं व्यसुं च दुरितं वैरं सौख्यं शुचं क्रमात् ॥ ९ ॥

नैस्व्यं दारिद्र्यम् । व्यसुं मृत्युम् ॥

केतुः क्रमाद्रुजं वैरं सुखं भीतिं शुचं धनम् ।
गतिं गदं दुष्कृतं च शोकं कीर्तिं च शत्रुताम् ॥ १० ॥

गदं रोगम् । दुष्कृतं पापम् ॥

अत्र कार्यविशेषे आवश्यकं ग्रहविशेषबलमाह—

क्रमशः सूर्यादिबलं नृपदर्शनसर्वकार्ययुद्धेषु ।
शास्त्रकरग्रहयात्रादीक्षासूह्यं विशेषेण ॥ ११ ॥

नृपदर्शने सूर्यबलं विशेषेणोह्यम् । सर्वेषु कार्येषु चन्द्रबलमूह्यम् । युद्धेषु भौमबलम् । शास्त्रं अध्येयमध्यापनं वा तत्र बुधबलम् । करग्रहो विवाहः । यात्रा गमनम् । दीक्षा यागादि दीक्षणम् । तत्र क्रमेण गुरुशुक्रशनिबलमावश्यकम् । तत्तद्वारोपि तत्र शुभः ॥

अथ वेधमाह चतुर्भिः—

सूर्योऽरिदिक्त्र्यायगतोऽपि नेष्टो
व्ययाब्धिनन्देषु गतैर्नभोगैः ।

चन्द्रः कुसप्ताद्यशिवाम्बिदिक्स्थः
शरद्विषर्याष्टनवाब्धिसंस्थैः ॥ १२ ॥

षष्ठादिशुभस्थानस्थितोऽपि सूर्यः क्रमेण व्ययादिस्थानस्थितैः शनिव्यतिरिक्तग्रहैर्विद्धो भवति। अतः शुभोऽपि नेष्टः। [illegible] पञ्चमस्थानम्। यथा—स्वजन्मराशेः सकाशात् षष्ठस्थाने रविः शुभः स यदि जन्मराशेर्द्वादशस्थाने अन्ये ग्रहाः स्युस्तदा विद्धः शुभोऽप्यशुभफलदः। तथा दशमः सूर्यश्चतुर्थस्थानस्थितैस्तृतीयो नवमस्थैरेकादशस्थः पञ्चमस्थैर्विद्धो ज्ञेयः। एवमेव चन्द्रादिवेधोऽपि क्रमेण वक्ष्यते। जन्मस्थानस्थितश्चन्द्रः पञ्चमस्थानस्थितैर्ग्रहैर्बुधव्यतिरिक्तैर्विद्धः। एवं सप्तमस्थो द्वितीयस्थैः षष्ठो द्वादशस्थैः एकादशोऽष्टमस्थैः तृतीयो नवमस्थैः दशमश्चतुर्थस्थितैर्विद्धः॥

बुधः स्वाब्धिपण्मृत्युदिग्लाभसंस्थः
सुतत्र्यङ्कजन्माष्टमान्त्यस्थितैश्चेत्।
गुरुः पञ्चवित्ताङ्कसप्ताऽयसंस्थो
युगान्त्याभ्ररामाऽष्टमस्थैश्च विद्धः ॥ १३ ॥

द्वितीयचतुर्थषष्ठाऽष्टमदशमैकादशस्थानस्थो बुधः क्रमेण पञ्चमतृतीयनवमजन्माऽष्टमद्वादशस्थितैश्चन्द्रव्यतिरिक्तग्रहैर्विद्धो ज्ञेयः। पञ्चमद्वितीयनवमसप्तमैकादशस्थो गुरुर्यथाक्रमं चतुर्थद्वादशैकादशतृतीयाऽष्टमस्थानस्थितैर्विद्धः॥

शुक्रो जन्मद्वित्रितुर्यपञ्चाऽष्टाऽङ्कान्त्यलाभगः।
मृतिसप्तैकदिक्घर्मपञ्चोपान्त्यरिपुत्रिगैः ॥ १४ ॥

जन्माद्युक्तस्थानस्थितः शुक्रोऽष्टमादिस्थैर्ग्रहैः क्रमेण विद्धः। एकादशषष्ठतृतीयस्थाः शनिराहुकुजाः पञ्चमनवमद्वादशस्थैर्विद्धाः स्युः एवमेव केतुरपि। तत्र शनेः सूर्यातिरिक्तैर्वेधो ज्ञेयः। तदेवाह—नेति। रविमन्दयोश्चन्द्रसौम्ययोश्च परस्परं वेधो नास्तीत्यर्थः॥

शनिराहुकुजालाभषट्त्रिगाः पञ्चगोऽन्त्यगैः ।
केतोस्तु राहुवद्वेधो नार्कार्क्योर्नेन्दुसौम्ययोः ॥ १५ ॥

एकादशषष्ठतृतीयस्थाः शनिराहुकुजाः पञ्चमनवमद्वादशस्थैर्विद्धाः स्युः । एवमेव केतुरपि । तत्र शनेः सूर्यातिरिक्तैर्वेधो ज्ञेयः । तदेवाह—नेति । रविमन्दयोश्चन्द्रसौम्ययोश्च परस्परं वेधो नास्तीत्यर्थः ॥

शुक्लपक्षे शशी श्रेष्ठो धनधर्मसुतेष्वपि ।
षष्ठाष्टमचतुर्थस्थैर्यदि विद्धो न खेचरैः ॥ १६ ॥

द्वितीयनवपञ्चमगतश्चन्द्रः शुक्लपक्षे श्रेष्ठः। अत्रापि वेधमाह—षष्ठेति । अत्रापि बुधातिरिक्तैरिति ज्ञेयम् ।

अथ वेधमाह—

एवमेव विपरीतवेधतो
वामवेधविधिरुच्यते बुधैः ।
तत्र दुष्टफलदोऽपि खेचरः
सम्प्रयच्छति फलं शुभं नृणाम् ॥ १७ ॥

एवमेव पूर्वोक्तक्रमेणैव विपरीतवेधश्चेद्वामवेध उच्यते । तत्र वामवेधे दुष्टोऽपि खेचरः शुभफलदो भवति । यथा सूर्यो द्वादशे दुष्टफलदोपि षष्ठस्थानस्थितैः शनिवर्जितैर्ग्रहैर्विद्धः सन् शुभो भवति । एवमुत्तरस्थानेषु स्थितो ग्रहः प्राक्पठितस्थानस्थितैः क्रमेण विद्धः शुभ इति ज्ञेयं सर्वत्र ॥

अस्मिन्वेधे देशभेदगणनायां मतभेदं चाह—

हिमाद्रिविन्ध्ययोर्मध्ये वेध इत्याह कश्यपः ।
जन्मभाद्वेधकं केचिद्ब्रह्माधिष्ठितभात्परे ॥ १८ ॥

हिमाचलविन्ध्याचलयोर्मध्यवर्तिन्येव देशेऽयं वेधो ज्ञेयो न सर्वदेशेष्विति कश्यप आह । तथा च तद्वचनम्—"हिमाद्रिविन्ध्ययोर्मध्ये वेधजं तद्ब्रह्मालयात्" इति । उक्तं द्विविधं वेधकं केचिन्नारदादयः

लज्जावतीकुष्ठवलाप्रियङ्गुभि-
र्मुस्ताख्यसिद्धार्थहरिद्रदारुभिः ।
पुङ्खेन लोध्रेण युतैर्जलैर्नरः
स्नायात्सवित्रादिकवैकृतच्छिदे ॥ २५ ॥

लज्जावती औषधिविशेषः । प्रियङ्गुः फलिनी । सिद्धार्थाः सर्षपाः । दारुर्दारुहरिद्रा । पुङ्खः शरपुङ्खः । शेषं प्रसिद्धम् । एतैरौषधैर्युतैर्जलैर्नरः सूर्यादिवैकल्यपरिहाराय स्नायात् ॥

गौः शङ्खो रक्तवृषः स्वर्णं पीताम्बरं सिताश्वश्च ।
असिता गौश्च महासिश्छागः सूर्यादिदक्षिणाः क्रमशः २६

एताः क्रमेण सूर्यादिभ्यो दक्षिणाः । तत्र सूर्याय गौर्धेनुः । चन्द्राय शङ्खः । सिताश्वः श्वेतहयः । असिता गौः कृष्णा धेनुः । महासिर्महाखङ्गः । छागो मेषः ॥

अथ चन्द्रावस्थागणनोपायमाह—

खरसगुणं गतमृक्षं भुक्तघटीसंयुतं चतुर्गुणितम् ।
शरयुगभक्तं रविभिस्तष्टमवस्थाः क्रियादिन्दोः ॥ २७ ॥

अश्विनीमारभ्य गतनक्षत्रं खरसैः षष्ट्या गुण्यं वर्तमाननक्षत्रस्य भुक्तघटीभिः संयुतं तत्पुनश्चतुर्गुणितं कार्यम् । शरयुगैः पञ्चचत्वारिंशता भाज्यम् यल्लब्धं ता गतावस्थाः यच्छेषं तद्वर्तमानावस्थासम्बन्धि ज्ञेयम् । तत्र लब्धाङ्कस्य द्वादशाधिक्ये द्वादशभिर्भागः यच्छेषं ताश्चन्द्रस्य गता अवस्थाः स्युः । ता अवस्था मेषराशेः पुंसः प्रवासादिसंज्ञाः । वृषराशेर्नाशादिसंज्ञाः । एवं मिथुनादिदशराशिषु विपदादिसंज्ञा द्वादशावस्थाः क्रमेण भवन्तीत्यर्थः ॥

अथासामवस्थानां अन्वर्थसंज्ञा आह—

प्रोषितनाशविपज्जयहासरतिक्रीडसुप्तभुक्ताख्याः ।
ज्वरकम्पितस्थिराख्या द्वादश चन्द्रस्य मेषतोऽवस्थाः २८

स्पष्टम् ॥

**चन्द्रः शुक्लाद्यतिथौ शुभोऽशुभो वा तथा सपक्षोपि ।**
**व्यत्यासेन च कृष्णे चन्द्रबलं सङ्कटे महति बुध्येत् ॥२९॥**

शुक्लपक्षस्याद्यतिथौ प्रतिपदि चन्द्रः शुभश्चेत्सम्पूर्णः शुक्लपक्षः शुभः । अशुभश्चेत्तदा सम्पूर्णः पक्षोऽशुभः । कृष्णे कृष्णपक्षे चैतत् व्यत्यासेन वैपरित्येन ज्ञेयम् । यथा—कृष्णपक्षप्रतिपदि दुष्टे चन्द्रे सति सम्पूर्णः कृष्णपक्षः शुभः । समीचीने चन्द्रे सम्पूर्णः पक्षोऽयमशुभ इति । इदं चन्द्रबलं महति सङ्कटे जानीयात् ॥

अथ प्रसङ्गाद्ग्रहणफलमाह—

**स्वजन्मराशेर्ग्रहणं रवीन्द्वोः**
**शुभाय कर्मत्रिषडायसंस्थम् ।**
**स्यान्मध्यमं धर्मधनद्युनस्थं**
**कष्टाय जन्माष्टसुहृत्सुतान्त्यम् ॥ ३० ॥**

स्वजन्मराशिमारभ्य दशमतृतीयषष्ठैकादशराशिस्थ सूर्यचन्द्रग्रहणं शुभाय भवति । नवमद्वितीयसप्तमस्थं मध्यमं स्यात् । जन्माष्टमचतुर्थपञ्चमद्वादशेषु स्थितमशुभाय स्मृतम् । मुहूर्तचिन्तामणौ परिहारोप्युक्तः—"जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा चिन्तासौख्यकलत्रदौःस्थ्यमृतयः स्युर्माननाशः सुखम् । लाभोपाय इति क्रमात्तदशुभध्वस्त्यै जपस्वर्णगोदानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ॥" इति ॥

**असत्संस्थानगौ खेटौ सदसद्वीक्षितौ यदि ।**
**निःफलौ स्तस्तथा यस्तु निजशत्रुनिरीक्षितः ॥ ३१ ॥**

दुष्टस्थानस्थितो ग्रहः शुभग्रहैरवलोकितश्चेन्निष्फलः स्यात् । शुभस्थानस्थितोऽपि पापग्रहैरवलोकितोऽथवा निजशत्रुनिरीक्षितो निष्फल इत्यर्थः ॥

**अस्तङ्गतो नीचगतस्तथा शत्रुगृहं गतः ।**
**शुभं वाप्यशुभं विद्वान्न तस्य फलमादिशेत् ॥ ३२ ॥**

स्पष्टमिदम् ॥

**जन्मसम्पद्विपत्क्षेमप्रत्परिः साधका वधः ।**
**मैत्रातिमैत्रा स्युस्तारास्त्रिरावृत्त्या स्वजन्मभात् ॥ ३३ ॥**

यद्दिने तारावलं विचार्यते तद्दिनतारा स्वजन्मनक्षत्रात्त्रिरावृत्त्या पुनः पुनरावृत्तित्रयेण गणनीयाः ताश्च क्रमेण जन्मादिसंज्ञिकाः स्युः । जन्मनक्षत्रादिननक्षत्रे गणिते नवभिर्भक्तेऽवशिष्टतारायाः शुभमशुभं वा नामानुसारं फलं वाच्यमिति फलितोऽर्थः । तत्र प्रथमतारा जन्माख्या । द्वितीया सम्पत् । एवं समान्त्या च शुभा ॥

अथावश्यककृत्ये दुष्टतारापरिहारमाह—

**जन्मत्रिपञ्चसप्ताख्यतारादोषे यथाक्रमम् ।**
**शाकं गुडं च लवणं तिलस्वर्णं समर्पयेत् ॥ ३४ ॥**

जन्मतारायां शाकं वास्तूकवृन्ताकादि समर्पयेत् । विपत्तारायां गुडं दद्यात् । प्रत्परितारायां लवणं दद्यात् । वधतारायां तिलयुक्तं स्वर्णं समर्पयेत् । ब्राह्मणायेति शेषः ॥

**विना चन्द्रवलं शुक्ले कृष्णे तारावलं विना ।**
**कार्यं न कार्यं किं वाच्यमुभयत्रोभयं न चेत् ॥ ३५ ॥**

उभयत्र पक्षद्वये उभयं चन्द्रवलं तारावलं च नास्ति चेत् । कार्यं न कर्तव्यमिति किं वाच्यम् । शेषं स्पष्टम् ॥

**प्रथमे पर्यये त्याज्या दुष्टा तारा न चान्तिमे ।**
**मध्ये वधारिविपदां त्याज्योऽङ्घ्रिरुयघ्निभूमितः ॥३६॥**

प्रथमे पर्यये प्रथमावृत्तौ दुष्टा वधप्रत्यरिविपद्रूपा तारा समग्रा षष्टिघटिकात्मिकापि त्याज्या । अन्तिमे पर्यये तृतीयावृत्तौ एततारात्रयं नैव त्याज्यं षष्टिघटिकात्मकमपि शुभमित्यर्थः । मध्ये पर्यये द्वितीया-

वृत्तौ वधतारायास्तृतीयश्चरणः प्रत्यरितारायाश्चतुर्थश्चरणः विपत्तारायां भूमितो भूमिसङ्ख्यः प्रथमस्त्याज्य इत्यर्थः । जन्मतारा तु पर्यायत्रयेऽपि समग्रा त्याज्येत्यर्थासिद्धम् ॥

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।**
**रघुनाथो गोचरस्थं शुभदफलनिरूपणम् ॥ २७ ॥**

गोचरस्थं गोचरप्रकरणे विद्यमानं दिवि सीदन्ति गच्छन्ति शुभदो ग्रहास्तेषां फलं तस्य निरूपणं चक्रे कृतवान् ॥

इति सुखठाणकरोपाह्वभट्टरामचन्द्रसुतमहेश्वरभट्टविरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां गोचरप्रकरणं पञ्चमम् ॥

---

## संस्कारप्रकरणम् ६

**संस्कारहीना भटमारवञ्जरा**
**जाता भवन्त्युत्तमवंशजा अपि ।**
**संस्कारशास्त्रोक्तमतो निषेकतः**
**केशान्तपर्यन्तमनेहसं ब्रुवे ॥ १ ॥**

अथ संस्कारप्रकरणं व्याख्यायते ॥ संस्क्रियते पुरुषोऽनेन श्रौतेन स्मार्तेन वा कर्मणेति संस्कारः कर्मविशेषः । लक्षणया तदुपयुक्तदिनशुद्ध्यादिकं संस्कारशब्देनोच्यते । तेन हीना नरा जाता उत्तमवंशजा अपि भटमारसंज्ञकाः केरलदेशे प्रसिद्धाः ब्रह्मबन्धवस्तद्भवन्ति । अतः संस्कारशास्त्रोक्तं निषेकतो गर्भाधानमारभ्य केशान्तपर्यन्तमनेहसं समयं ब्रुवे ॥

तत्र गर्भाधानसंस्कारो रजस्वलाधीनः । तत्र प्रथमरजोदर्शने शुभाशुभफलमुक्तं वसिष्ठादिभिस्तदेतदाह त्रिभिः—

**आद्यं रजोदर्शनमन्त्यमार्ग-**
**नभस्तपोमाधवमासि शुक्ले ।**

मृदुध्रुवक्षिप्रचरेषु वारे
लग्ने च सौम्यस्य तदुत्तमं स्यात् ॥ २ ॥

आद्यमिति । अन्त्यः फाल्गुनः । मार्गो मार्गशीर्षः । नभाः श्रावणः । तपो माघः । माधवो वैशाखः । एतस्मिन्मासि । तथा शुक्ले शुक्लपक्षे मृद्वादिषोडशनक्षत्रेषु सौम्यस्य शुभग्रहस्य सोमबुधगुरुशुक्ररूपस्य वारे लग्ने च वृषभादौ यत्प्रथमं रजोदर्शनं तदुत्तमं स्यात् ॥

मध्यमं कृत्तिका मूलविशाखादित्यपित्र्यभे ।
अधमं भरणीज्येष्ठाऽश्लेषपूर्वाऽऽर्द्रकासु च ॥ ३ ॥

मध्येति । आदित्यं पुनर्वसुः । पित्र्यं मघा । अश्लेषपूर्वाः पूर्वात्रयम् । शेषं स्पष्टम् ॥

रिक्तादर्शाष्टमीषष्ठीद्वादशीग्रहणे रुजि ।
सन्ध्याविष्ट्योर्दुष्टयोगे निद्रायां सङ्क्रमे न सत् ॥ ४ ॥

रिक्तेति । रिक्तादिषु आद्यं रजोदर्शनं न सत् । रुजि रोगे ॥

अथ रजस्वलास्नानमुहूर्तमाह—

स्नानं कुर्यादृतुमती स्वात्यर्काश्विवसुध्रुवे ।
शक्रमित्रमृगान्त्येषु सल्लग्नतिथिवासरे ॥ ५ ॥

स्वात्यादुक्तद्वादशनक्षत्रेषु । सल्लग्ने चन्द्रबुधगुरुशुक्रस्वामिके लग्ने । सत्तिथौ रिक्तारहिततिथौ । सद्वारे च ऋतुमती रजस्वला स्नानं कुर्यात् ॥ दाक्षिणात्यास्तु चतुर्थदिन एव स्नानं कुर्वन्ति । अन्ये तु विहितद्दिने कुर्वन्तीति देशाचाराद्व्यवस्था ॥

अथ गर्भाधानमुहूर्तमाह—

गर्भाधानं ध्रुवार्केन्दुमित्रस्वातीश्रुतित्रये ।
शुभं चित्राऽदितीज्याश्वे मध्यं शेषेषु चाधमम् ॥ ६ ॥

गर्भेति । उत्तरात्रयरोहिणीहस्तमृगानुराधास्वातीश्रवणधनिष्ठाशत-

तारासु गर्भाधानं शुभम् । चित्रापुनर्वसुपुष्याश्विनीषु मध्यमम् । शेषेषु भरणीकृत्तिकार्द्राऽश्लेषामघापूर्वाफल्गुनीविशाखाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदारेवतीष्वधमम् । मुहूर्ततत्त्वादौ तु मघारेवतीमूलाख्यं नक्षत्रत्रयमेव त्यक्तम् ॥

दिगर्कविश्वद्विशराग्निभूहये-
मिते तिथौ नाद्यनिशाचतुष्टये ।
अयुग्मरात्रिष्वपि नो न संध्य-
योर्दिने न पित्रोर्न दिने न पर्वणि ॥ ७ ॥

दिगिति । दशमीद्वादशीत्रयोदशीद्वितीयापञ्चमीतृतीयाप्रतिपत्सप्तमीषु गर्भाधानं शुभम् । प्रथमरात्रिचतुष्टये । विषमरात्रिष्वपि । तथा सन्ध्ययोः प्रातःसन्ध्यायां सायंसन्ध्यायां च । दिने दिवा । पित्रोर्दिने मातापित्रोः श्राद्धदिने । "चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा । पर्वाण्येतानि चत्वारि रविसङ्क्रमणं तथा ॥" इति उक्ते पर्वणि च गर्भाधानं न कार्यमित्यर्थः ॥

सद्दिने केन्द्रकोणस्थसद्भिस्त्र्यायारिगैः खलैः ।
विलग्ने पुंग्रहैर्दृष्टे चन्द्रे पुरुषभांशगे ॥ ८ ॥

सद्दिन इति । सद्दिने सोमबुधगुरुशुक्रवारे । केन्द्रकोणस्थितैः शुभैः । तृतीयैकादशषष्ठगतैः पापैः सद्भिः । तथा पुंग्रहैः सूर्यभौमगुरुभिर्दृष्टे विलग्ने । तथा पुरुषभांशगे विषमराशीनां नवांशगे चन्द्रे सति । गर्भाधानं कार्यमित्यर्थः ॥

वैधृतिं पापभं भद्रामुत्पातं वधजन्मभे ।
गण्डान्तमष्टमं लग्नं व्यतीपातं च वर्जयेत् ॥ ९ ॥

वैधृतिमिति । पापभं पापग्रहयुक्तं लग्नम् । भद्रां विष्टिम् । उत्पातं दिव्यभौमान्तरिक्षभेदेन त्रिविधम् । वधजन्मभे वधतारां जन्मतारां च ।

गण्डान्तं तिथिनक्षत्रादिसन्धिविशेषं पूर्वोक्तम् । जन्मराशेर्जन्मलग्नाद्वा-ऽष्टमं लग्नम् । वैधृतिं व्यतीपातं च गर्भाधाने वर्जयेत् ॥

अथ गर्भिणीमासेश्वरान् स्त्रीणां चन्द्रबलं चाह—

> मासेश्वराः शुक्रकुजेज्यसूर्य-
>
> चन्द्रार्किविल्लग्नपचन्द्रसूर्याः ।
>
> बलं विधोर्गर्भविधौ वधूनां
>
> ज्ञेयं ततोऽन्यत्र च भर्तुरेव ॥ १० ॥

मासेति । गर्भिण्याः प्रथमादिमासानां क्रमेणेश्वरा ज्ञेयाः । तत्रार्किः शनिः । वित् बुधः विल्लग्नपो गर्भाधानलग्नाधिपतिरेवाष्टममासाधिप इत्यर्थः । गर्भविधौ गर्भसंस्कारे वधूनां स्त्रीणां विधोर्बलं गोचरप्रकरणोक्तरीत्या चन्द्रबलमावश्यकम् । ततोऽन्यत्र तु कर्मणि भर्तुरेव चन्द्रबलं ग्राह्यम् ॥

अथ सीमन्तमुहूर्तमाह सार्धेन—

> सीमन्तकर्म मृगपुष्यकरध्रुवान्त्य-
>
> मूलादितिश्रवणभेऽष्टमषष्ठमासे ।
>
> त्यक्त्वा शनेर्दिनममानवपक्षरन्ध्रं
>
> केन्द्रत्रिकोणगशुभैस्त्रिषडायगान्यैः ॥ ११ ॥
>
> मासाधिपे बलिनि रिःफषडष्टवर्जे
>
> चन्द्रेऽष्टशुद्धिसहिते पुरुषांशलग्ने ॥

सीमन्तेति । मृगादिनक्षत्रे । अष्टमे षष्ठे वा मासि । शनेर्दिनं शनिवारं अमाममावास्यां नव नवमीं पक्षरन्ध्रं 'शुभमास्त्याज्याः पक्षरन्ध्रं द्वितीया दशमीं विना' इति प्रागुक्तं तिथिपञ्चकं च त्यक्त्वा । केन्द्रत्रिकोणगैः शुभैः त्रिषडेकादशगैरन्यैः पापैः । सीमन्तकर्म सीमन्तोन्नयनाख्यः संस्कारः कार्यः । मासाधिपेति । गर्भमासाधिपे बलिनि

सति। द्वादशषष्ठाष्टमस्थानरहिते चन्द्रे। तथाष्टमशुद्धिसहिते पुरुषांशलग्ने विषमराशिरूपे नवांशे लग्ने च सीमन्तः कार्य इत्यर्थः॥

अथ पुंसवनविष्णुबलिमुहूर्तमाह—

**तेनैव पुंसवनकर्म तृतीयमासे**
**मासेऽष्टमे गुरुकविष्णुषु विष्णुपूजा ॥ १२ ॥**

तेनैवेति। तेनैव सीमन्तकर्मण्युदितेनैव नक्षत्रादिना तृतीयमासे पुंसवनकर्म पुंसवनाख्यः संस्कारः कार्यः॥ तथाऽष्टमे मासे गुरुकविष्णुषु पुष्यरोहिणीश्रवणनक्षत्रेषु विष्णुपूजा कार्या॥

**जातकर्मादिकं पर्वरिक्तारिक्ते शुभे दिने।**
**एकादशे द्वादशे वा चरक्षिप्रमृदुध्रुवैः ॥ १३ ॥**

पर्वाणि चतुर्दश्यादीनि रिक्ताश्चतुर्थ्यादयस्ताभिश्च रिक्ते रहिते। शुभे दिने शुभवारे। तथा एकादशे द्वादशे वा दिने। चरक्षिप्रादिनक्षत्रेषु जातकर्म आदिशब्दान्नामकर्म च कार्यम्॥ यद्यपि जातकर्म जन्मानन्तरमेव विहितं तथापि पित्राद्यसन्निधानेन व्यतीपातादिसद्भावेन वा न कृतं चेत्तदा मुहूर्तविचारेण कार्यम्॥ प्रसवकालेऽपि व्यतीपातादिवर्जनमाह गर्गः—"व्यतीपाते च सङ्क्रान्तौ ग्रहणे वैधृतावपि। श्राद्धं विना शुभं कर्म प्रसवकालेऽपि नाचरेत्॥" इति॥

अथ सूतिकास्नानमुहूर्तमाह—

**सूतीस्नानं ध्रुवार्केन्दुमित्रस्वात्यन्त्यभाश्विभे।**
**षडष्टरविरिक्तोनतिथौ भौमेज्यभानुषु ॥ १४ ॥**

सूतीति। उत्तरात्रयरोहिणीहस्तमृगानुराधास्वातिरेवत्यश्विनीषु। षष्ठ्यष्टमीद्वादशीरिक्ताभिर्वर्जिते तिथौ। भौमगुरुरविवारेषु। सूत्याः प्रसूतायाः स्नानं विहितम्॥

अथ प्रसङ्गात्प्रथमादिमासोत्पन्नदन्तफलमाह—

आत्मानुजस्वसृमातृग्रजान्मासेषु पञ्चसु ।
दन्तोत्पत्तिः क्रमाद्धन्ति शिशोः षष्ठादिषूत्तमा ॥ १५ ॥

आत्मेति । शिशोर्जन्मानन्तरं प्रथमादिषु पञ्चसु मासेषु दन्तोत्पत्तिः क्रमेण आत्मादीन् हन्ति । यथा प्रथमे मासि दशनोत्पत्तिः आत्मानं बालं हन्ति । द्वितीये कनिष्ठभ्रातरम् । तृतीये भगिनीम् । चतुर्थे मातरम् । पञ्चमे ज्येष्ठभ्रातरम् । षष्ठादिषु मासेषूत्तमा शुभा ॥

जन्मन्येवोर्ध्वपङ्क्तौ वा पितृमातृस्वघातिनी ।
गजनौस्वर्णपीठस्थं स्नपयेच्छान्तिमाचरेत् ॥ १६ ॥

जन्मेति । जन्मकाल एव दन्तोत्पत्तिश्चेदथवा जन्मानन्तरं विहिते निषिद्धेऽपि काले प्रथममूर्ध्वपङ्क्तौ दन्तजननं चेत्तदा पित्रादीन् हन्तीत्यर्थः । परिहारमाह—गजेति । गजपृष्ठगं तं नौस्थं स्वर्णपीठस्थं वा बालं सर्वौषधादिसामग्र्या स्नपयेत् । शान्तिस्तु प्रमिताक्षरायां द्रष्टव्या ॥

चतुर्ष्वङ्घ्रिषु मूलस्य पितृमातृधनापदः ।
जातः शिशुः क्रमाद्धन्ति व्युत्क्रमात्सार्पभस्य च ॥ १७ ॥

चतुर्ष्वङ्घ्रिष्विति । मूलनक्षत्रस्य चतुर्ष्वङ्घ्रिषु जातः शिशुः क्रमेण पित्रादीन् हन्ति । द्वितीये मातरं तृतीये धनं चतुर्थे आपदं हन्ति । चतुर्थः शुभ इत्यर्थः । सार्पभस्य आश्लेषानक्षत्रस्य व्युत्क्रमाद्वैपरीत्येन फलं ज्ञेयम् । यथा—आश्लेषायाः प्रथमे चरणे जातः शिशुरापदं हन्ति । प्रथमश्चरणः शुभ इत्यर्थः । द्वितीये धनं हन्ति । तृतीये मातरं चतुर्थे पितरमिति ॥

अभुक्तमूलं तत्प्राहुः सन्धौ यद्घटिकाद्वयम् ।
रेवत्यश्विभयोः सार्पमघयोरैन्द्रमूलयोः ॥ १८ ॥

अभुक्तेति । रेवत्यश्विन्योराश्लेषामघयोर्ज्येष्ठामूलयोश्च सन्धौ यद्घटि-

'काष्टकं यथा ज्येष्ठाया अन्ते चतस्रः मूलस्याद्याश्चतस्र एवं घटिकाष्टकं तत् अमुक्तमूलं प्राहुः । यथाऽऽह वसिष्ठः—"भुजङ्गपौरन्दरपौष्णभानां तदग्रभानां च यदन्तरालम् । अमुक्तमूलं प्रहरप्रमाणं त्यजेत्सुतं तत्रभवं सुतां च ॥" इति । त्रिष्वप्यमुक्तमूलेषु ज्येष्ठामूलयोः सन्धिरतितरां निषिद्ध इति स एव प्रायेण प्रसिद्धः ॥

**ज्येष्ठामूलान्तरालस्थघटीमेकां गुरुर्जगौ ।**
**केचिज्ज्येष्ठान्तिमाः पञ्च मूलाद्यष्टौ तदूचिरे ॥ १९ ॥**

ज्येष्ठेति । गुरुर्बृहस्पतिः । तथा च तद्वचनम्—"ज्येष्ठान्त्यघटिकार्धं च मूलादौ घटिकार्धकम् । तयोरन्तर्गता नाडीत्यमुक्तमूलमुच्यते ॥" इति ॥ केचिदाचार्याः यथाहुः—"ज्येष्ठान्त्या घटिकाः पञ्च मूलाद्या वसुनाडिकाः । अमुक्तमिति तज्ज्ञेयं तत्र जातं शिशुं त्यजेत् ॥" इति ॥

**तस्माद्यायाः सन्निहितास्तास्ता निन्द्या व्यवस्थया ।**
**तत्रोत्पन्नं त्यजेद्वाष्टवर्षं पश्येत्पिता न तम् ॥ २० ॥**

तास्तथा इति । अनेकमतव्यवस्थया ज्येष्ठान्ते मूलादौ च या याः सन्निहिताः समीपे विद्यमाना घटिकास्तास्ता अतीव निन्द्या इति ज्ञेयम् । तत्रामुक्तमूले उत्पन्नं शिशुं त्यजेत् । कस्मैचित्सजातीयाय दद्यात् । अथ वा पिता तमष्टवर्षपर्यन्तं न पश्येत् ॥

**भाद्राश्विनशुचिमाघे स्वर्गे मार्गोन्त्यशुक्रराधेऽधः ।**
**मूलं भूमौ श्रावणमधूर्जपौषेषु तत्फलं तत्र ॥ २१ ॥**

भाद्रेति । भाद्रपदाश्विनाषाढमाघमासेषु मूलं स्वर्गे वर्तते । मार्गफाल्गुनज्येष्ठवैशाखमासेषु मूलमधः पाताले तिष्ठति । श्रावणचैत्रकार्तिकपौषेषु भूमौ मूलम् । तत्फलं तत्र ज्ञेयम् । भूमौ । मूले सत्येवाधिकमशुभमित्यर्थः ॥

**व्याघातवज्रपरिघव्यतिपातगण्ड-**
**शूलाख्यवैधृतिषु सङ्क्रमदग्धमृत्यौ ।**

गण्डान्तविष्टयवमकृष्णचतुर्दशीषु
दर्शेन्द्रपातपितृभेषु न जन्म शस्तम् ॥ २२ ॥

व्याघातेति । व्याघातादयो योगाः प्रसिद्धाः । सङ्क्रमः सूर्यसङ्क्रमणपुण्यकालः । दग्धयोगो 'दग्धा—विषा' इत्यादिना त्याज्यप्रकरणे उक्तः । मृत्युयोगः 'मृत्युयोगो रवौ मित्रम्' इत्यादिना तत्रैवोक्तः । गण्डान्तं तिथिनक्षत्रलग्नानां सन्धिः प्रागुक्तः । विष्टिर्भद्रा । अवमस्तिथिक्षयः । कृष्णचतुर्दशी प्रसिद्धा । दर्शोऽमावास्या । इन्द्रो ज्येष्ठानक्षत्रम् । पातो महापातः । पितृभं मातापित्रोर्जन्मनक्षत्रम् । एषु निमित्तेषु शिशोर्जन्म न शस्तम् । अनिष्टकृदित्यर्थः । तत्परिहारस्तु शौनकादिग्रन्थेषु द्रष्टव्यः ॥

स्तन्यपानं मृदुक्षिप्रध्रुवभेषु हितं शिशोः ।
त्यक्त्वा रिक्तां कुजं विष्टिं व्यतीपातं च वैधृतिम् ॥२३॥

अथ दुग्धपानम् । स्पष्टम् ॥

दोलारोहोऽर्कदिग्दन्तधृतिभूपैर्मिते दिने ।
मृदुक्षिप्रध्रुवैर्वारे सतां सत्तिथिषु स्मृतः ॥ २४ ॥

दोलारोह इति । अर्का द्वादश । दिक् दश । दन्ता द्वात्रिंशत् । धृतिरष्टादश । भूपाः षोडश । एतैर्मिते दिने मृदुध्रुवक्षिप्रभेषु शुभवारे रिक्ताऽमारहिततिथौ दोलारोहो दोलायां बालस्य स्थापनं कार्यम् ॥

दोलाचक्रमाह—

तच्चक्रमर्कभात्पञ्चपञ्चपञ्चेषुसप्तभैः ।
नीरोगमृतिदौर्बल्यव्याधिसौख्यानि च क्रमात् ॥ २५ ॥

तच्चक्रमिति । यस्मिन्दिने दोलायां स्थाप्यते तद्दिननक्षत्रे सूर्याक्रान्तनक्षत्राद्गणिते सति प्रथमपञ्चनक्षत्रैर्नीरोगता । तदग्रिमपञ्चनक्षत्रैर्मृतिः ।

ततः पञ्चभिर्दौर्विल्यं कार्यम् । ततः पञ्चभिर्व्याधिः । ततः सप्तभिः सौख्यमिति क्रमात्फलम् । शिशोरेवैतत् ॥

**शिशोर्निष्क्रमणं गेहाद्द्वादशेऽह्नि समाचरेत् ।**
**मासे तृतीये तुर्ये वा यात्राशास्त्रोदितेऽहनि ॥ २६ ॥**

शिशोरिति । शिशोर्गेहान्निष्क्रमणं गृहाद्बहिर्गमनं द्वादशेऽह्नि द्वादशे दिनेऽथवा तृतीये तुर्ये वा मासि यात्राप्रकरणोक्तदिने समाचरेत् ॥

**सूत्या सलिलं पूज्यं करहरिमित्रादितीज्यमूलेन्दौ ।**
**गुरुबुधचन्द्रेऽह्नि विनामध्वधिपौषद्वितीयमासास्तम्॥ २७॥**

सूत्येति । करो हस्तः । हरिः श्रवणः । इन्दुर्मृगः । हस्तादिनक्षत्रेषु सूत्या सूतिकया जलं पूजनीयम् । चैत्राधिकपौषमासान् द्वितीयमासं गुरुशुक्रयोरस्तं च वर्जयित्वा । अर्थात्प्रथमतृतीयादिमासाः प्रशस्ताः ॥

**अन्नप्राशनमद्रिविश्वहुतभुक्पूर्णाद्वितीयासु स-**
**न्मैत्रक्षिप्रचरध्रुवैः सितबुधेन्द्वीज्याह्नि षड्त्र्यायगैः ।**
**पापैर्विक्रमकेन्द्रकोणभगतैः सद्भिर्विहायाष्टषड्-**
**लग्नेन्दुं झषमेषवृश्चिकतनुं जन्मर्क्षलग्नाष्टमम् ॥२८ ॥**

अन्नप्राशनमिति । सप्तमीत्रयोदशीतृतीयापञ्चमीदशमीपूर्णिमाद्वितीयासु । मैत्रक्षिप्रादिषोडशभेषु । शुभवारे । षट्त्रिलाभगतैः पापैः । तृतीयकेन्द्रनवपञ्चमस्थानगतैः शुभैः । अन्नप्राशनं बालस्य प्रथमभोजनं सत् प्रशस्तम् । अष्टमे षष्ठे लग्ने चेन्दुम् । मीनमेषवृश्चिकरूपं लग्नम् । जन्मराशेर्जन्मलग्नाच्चाष्टमं लग्नं च विहाय त्यक्त्वा ॥

**षष्ठात्समे शिशोरोजे कन्याया मासि पञ्चमात् ।**
**केन्द्रत्रिकोणरिःफाष्टस्थानान्यतमसंस्थितैः ॥ २९ ॥**

**रविक्षीणेन्दुपूर्णेन्दुकुजज्ञेज्यास्फुजिद्यमैः ।**
**कुष्ठभिक्षायज्ञपित्तज्ञानायुर्भोगरोगभाक् ॥ ३० ॥**

षष्ठादिति । षष्ठात् षष्ठमासमारभ्य पुत्रस्य समे मासि । कन्यायाः पञ्चमादोजे मासि विषममासेऽन्नप्राशनं कार्यम् । अथान्नप्राशने स्थानवशात्ग्रहफलमाह—केन्द्रेति । केन्द्रत्रिकोणद्वादशाष्टमस्थानमध्ये कस्मिंश्चित्स्थाने रव्यादिषु सत्सु क्रमेण कुष्ठादिफलानि ज्ञेयानि । अत्र केन्द्राणि दशमरहितानि १।४।७ "दशमे शुद्धिसंयुक्ते" इति नारदोक्तेः । उक्तस्थानमध्ये रवौ स्थिते बालः कुष्ठभाक् । क्षीणेन्दौ स्थिते भिक्षाभाक् । पूर्णेन्दौ यज्ञकृत् । भौमे पित्तभाक् । बुधे ज्ञानी । गुरावायुष्मान् । शुक्रे भोगी । शनौ रोगभाक् । वातरोगीत्यर्थः । राहुकेत्वोरप्येतदेव फलम् ॥

अथ क्षीणेन्दुपूर्णेन्दुलक्षणमाह—

**शुक्लाष्टम्यूर्ध्वदलाद्यावत्कृष्णाष्टमीदलं पूर्वम् ।**
**पूर्णश्चन्द्रः पूर्वैः प्रोक्तः क्षीणस्ततोऽन्यत्र ॥ ३१ ॥**

शुक्लाष्टमिति । शुक्लाष्टम्या उत्तरार्धमारभ्य कृष्णाष्टमीपूर्वार्धपर्यन्तं पूर्णश्चन्द्रः पूर्वैः प्रोक्तः । ततोऽन्यत्र कृष्णाष्टम्या उत्तरदलमारभ्य शुक्लाष्टमीपूर्वदलपर्यन्तं क्षीणश्चन्द्र इत्यर्थः ॥

अथ भूम्युपवेशनमाह—

**धरावराहावभिपूज्य पञ्चमे**
**मासे धरायामुपवेशयेच्छिशुम् ।**
**शुभेऽह्नि बद्धा कटिसूत्रमैन्दव-**
**क्षिप्रेन्द्रमित्रध्रुवभैरसृग्बले ॥ ३२ ॥**

धरेति । पञ्चमे मासि शुभवारे मृगशीर्षादिनक्षत्रैः सद्भिः । भौमबले च सति । पृथ्वीं वराहं चाभिपूज्य कटिसूत्रं कटौ बद्धा शिशुं पृथिव्यामुपवेशयेत् । तत्र मन्त्रास्तु पद्मपुराणे प्रसिद्धाः ॥

**वस्त्रं शस्त्रं पुस्तकं च स्वर्णं रूप्यं तदग्रतः ।**
**स्थाप्यं गृह्णाति यद्बालस्तेन तद्वृत्तिमादिशेत् ॥ ३३ ॥**

वस्त्रमिति । जीविकापरीक्षार्थं भूम्युपवेशनकाले तस्य बालस्याग्रतः वस्त्रादि स्थापनीयम् । तत्र बालो यद्गृह्णाति तेन तस्य जीविका कथयेत् ॥

**ताम्बूलं ध्रुवमृदुलघुहरिवसुमूलादितीन्द्रवातेषु ।**
**वृषमीनयुग्मकन्याघटमृगलग्ने सस्सूर्यसद्वारे ॥ ३४ ॥**

ताम्बूलमिति । ध्रुवाद्युक्तनक्षत्रेषु वृषाद्युक्तलग्ने सूर्यवारे शुभवारे च बालकाय ताम्बूलं दद्यात् । एतत्सार्धमासद्वयमितसमये प्रोक्तम् ॥

**कर्णवेधस्तु कर्णद्वयाऽदित्यभ-**
**क्षिममैत्रैः शुभः शोभनानां दिने ।**
**रिक्तरिक्ते तिथौ मासि षड्रसगै-**
**र्जन्मतः सूर्यभूपैर्मिते वा दिने ॥ ३५ ॥**

कर्णवेध इति । षड्रसगैर्मिते षष्ठेऽष्टमे सप्तमे वा मासि । जन्मदिनमारभ्य द्वादशे षोडशे वा दिने । रिक्तरिक्ते रिक्तारहिते तिथौ । शुभग्रहाणां वारे । श्रवणधनिष्ठापुनर्वसुलघुमृदुनक्षत्रैः कर्णवेधः शुभः ॥

**केन्द्रकोणत्रिलाभेषु सद्भिः खलै-**
**र्लाभषट्त्रिस्थितैः स्याद्विशुद्धेऽष्टमे ।**
**चैत्रपौषाऽवमाङ्जन्ममासोडुनी**
**युग्मवर्षे हरिस्वापमत्र त्यजेत् ॥ ३६ ॥**

केन्द्र इति । केन्द्रादिषु सद्भिः शुभैर्लाभादिषु स्थितैः पापैः । अष्टमे स्थाने विशुद्धे ग्रहरहिते च सति । कर्णवेधः शुभः स्यात् ॥ अत्र कर्णवेधे चैत्रपौषाधिकमासान् जन्ममासं जन्मनक्षत्रं च युग्मवर्षं द्वितीयचतुर्थादिकं समवर्षं हरिस्वापं आषाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यन्तं मासचतुष्टयं त्यजेत् ॥

चौलमुहूर्तमाह पञ्चभिः—

**चौलं लघुचरान्त्येन्द्रचित्राचान्द्रेषु सद्दिने ।**
**न पर्वषष्ठीरिक्ताद्ये न समासु समासु च ॥ ३७ ॥**

चौलमिति । लघ्वादिद्वादशनक्षत्रेषु सद्दिने शुभवारे चौलं स्यात् ॥ पर्वाणि 'चतुर्दश्यष्टमी' इत्यादिपूर्वोक्तानि । आद्या प्रतिपत् । उपलक्षणादष्टमी द्वादशी च । आसु तिथिषु चौलं न कार्यम् । समासु समासु द्वितीयचतुर्थादिषु समवर्षेषु न कार्यम् । "हायनोऽस्त्री शरत्समाः" इत्यमरः ॥

**विचैत्रमित्रोदग्याने शुभलग्ननवांशयोः ।**
**शुद्धेऽष्टमे तनौ नेष्टं जन्मलग्नभतोऽष्टमम् ॥ ३८ ॥**

विचैत्रेति । विचैत्रे चैत्रमासरहिते मित्रस्य सूर्यस्य उदग्याने उत्तरायणे शुभग्रहाणां लग्ने नवांशे च अष्टमे तनौ शुद्धे सति चौलं कार्यम् ॥ अत्र तनुशब्दस्य क्लीबत्वेन व्यवहारः प्रसिद्धः । जन्मलग्नाज्जन्मराशेश्चाष्टमं लग्नं नेष्टम् ॥

**त्रिषडाये खलैः केन्द्रे सद्भिः स्यादथ केन्द्रगैः ।**
**कुजार्किक्षीणचन्द्रार्कैर्वधपङ्गुमृतिज्वराः ॥ ३९ ॥**

त्रिषडाय इति । त्रिषडायस्थाने खलैः पापग्रहैः । केन्द्रे सद्भिः शुभग्रहैः चौलं स्यात् । अथ केन्द्रगैः कुजादिभिः वधादि फलम् । यथा—केन्द्रस्थे भौमे वधः । शनौ पङ्गुता । क्षीणचन्द्रे मृतिः । रवौ ज्वरः ॥

अथ मातरि गर्भिण्यां विशेषमाहा—

**आपञ्चमासाद्गर्भिण्यां मातरीष्टं तदूर्ध्वतः ।**
**पञ्चवर्षाधिकस्यैव व्रतबन्धेन वा सह ॥ ४० ॥**

आपञ्चेति । संस्कार्यस्य मातरि गर्भिण्यां सत्यां पञ्चममासमभिव्याप्य चौलमिष्टम् । तदूर्ध्वतः पञ्चमासेभ्य ऊर्ध्वं तु पञ्चवर्षाधिकस्योल्लङ्घितर-

अत्यर्धस्य संस्कार्यस्येष्टम् । न तु ततो न्यूनस्य ॥ अथ वा व्रतबन्धेन सह तदिष्टम् ॥

**मलिन्यां सूतिकायां वा शिशोर्मातरि नाचरेत् ।**
**चौलं व्रतं विवाहं च महानान्द्यादिकं तथा ॥ ४१ ॥**

मातरि मलिन्यां रजस्वलायां सूतिकायां जातापत्यायां वा शिशोश्चौलादिकं नाचरेत् ॥

अक्षरारम्भमाह द्वाभ्याम्—

**अक्षराणि विलिखेच्छ्रुतिचित्रा-**
**द्रौन्त्यलघ्वदितिमित्रमरुत्सु ।**
**द्वित्रिपञ्चरसदिग्रविशैवा-**
**ख्ये तिथौ शशिबुधेज्यसितेऽह्नि ॥ ४२ ॥**

अक्षराणीति । श्रवणादिदशनक्षत्रेषु । तत्र मरुत्स्वाती । तथा द्वितीयापञ्चमीषष्ठीदशमीद्वादश्येकादश्याख्ये तिथौ । शुभवारेऽक्षराणि विलिखेत् ॥

**चरवर्जे सतां लग्ने पञ्चमाब्दे रवावुदक् ।**
**पूजयित्वा गणपतिं विष्णुं वाग्देवतां रमाम् ॥ ४३ ॥**

चरेति । चरं वर्जयतीति तथाभूते सतां शुभग्रहाणां लग्ने । वृषमिथुनकन्याधनुर्मीनाख्ये इति यावत् । तथा पञ्चमाब्दे पञ्चमवर्षे रवावुदक् उत्तरायणस्थे सति गणपत्यादीन्पूजयित्वाऽक्षराणि लिखेत् ॥

अथ चत्वारिंशता व्रतबन्धप्रकरणमुच्यते—

**व्रतबन्धोऽग्निपित्र्येन्द्रद्वीशयाम्याम्बुपं विना ।**
**कुजार्को च विना कार्यो द्वित्रीष्वर्केशदिक्तिथौ ॥ ४४ ॥**

व्रतबन्ध इति । कृत्तिकामघाज्येष्ठाविशाखाभरणीशततारकास्त्यक्त्वा

शेषेष्वेकार्थशतिनक्षत्रेषु । तथा भौमशनिवारौ त्यक्त्वा शेषे रविवारादौ । तथा द्वितीयातृतीयापञ्चमीद्वादश्येकादशीदशमीतिथौ । व्रतबन्धः कार्यः । तत्र तृतीयाद्वादश्यौ प्रदोषाभावे ग्राह्ये ।

आप्येन्द्रयोः केचिदूचुः कार्यस्तस्मादसम्पदि ।
वारुणं गोलकादीनां शुभमित्यपरे जगुः ॥ ४५ ॥

अपांपतिरप्यो वरुणः स देवता यस्य तदाप्यं शततारा । इन्द्रो ज्येष्ठा तयोः केचिच्छ्रीपत्यादयः व्रतबन्धमूचुः । तस्मात्तत्र सोऽसम्पदि सङ्कटे कार्यः । अपरे केशवदैवज्ञादयो गोलकादीनां व्रतबन्धे वारुणं शुभमित्यूचुः ॥

पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ।
इत्यूचे राजमार्तण्डस्तन्निर्मूलमुपेक्षितम् ॥ ४६ ॥

पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति । इत्यूच इति स्पष्टम् ॥

जन्मतो गर्भतो वाऽब्दे विप्राणां पञ्चमेऽष्टमे ।
षष्ठैकादशयो राज्ञां सप्तमे द्वादशे विशाम् ॥ ४७ ॥

जन्मत इति । जन्मतो जन्मदिनमारभ्य गर्भदिनमारभ्य वा पञ्चमेऽष्टमे वा वर्षे विप्राणां व्रतबन्धः कार्यः । तत्रापि पञ्चमे काम्योऽष्टमे नित्य इति शेषम् । एवमुत्तरत्रापि ॥ "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे । राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे" इति मनुस्मृतेः ॥ एवं राज्ञां क्षत्रियाणां जन्मतो गर्भतो वा षष्ठ एकादशे वाब्दे कार्यः । विशां वैश्यानां सप्तमे द्वादशे वाब्दे कार्यः ॥

कालोऽथ द्विगुणो गौणस्तदूर्ध्वं व्रात्यतां व्रजेत् ।
सान्माघपञ्चके त्यक्त्वा कृष्णान्त्यांत्रिलवद्वयम् ॥ ४८ ॥

काल इति । अथ विप्रादीनां अष्टवर्षादिको यः काल उक्तः स द्विगुणश्चेद्गौणः । मुख्यकालातिक्रमे ब्राह्मणस्य षोडशवर्षपर्यन्तं क्षत्रियस्य

द्वाविंशतिवर्षपर्यन्तं वैश्यस्य चतुर्विंशतिवर्षपर्यन्तमुपनयनं गौणमित्यर्थः। तदूर्ध्वं गौणकालादुपरि व्रात्यतां पतितसावित्रीकत्वं व्रजेत् ॥ अथ मासशुद्धिमाह—स्यादिति। माघपञ्चके माघफाल्गुनचैत्रवैशाखज्येष्ठेषु। कृष्णपक्षस्य अन्त्यं त्रिलवद्वयं तिथिदशकं सक्त्वा स्यात्। त्रिहितमासानां कृष्णपक्षस्य पञ्चमीपर्यन्तं व्रतबन्धः स्यादित्यर्थः ॥

अथ सप्तशलाकाचक्रे वेधमाह—

**ऊर्ध्वं तिर्यग्रेखिकाः सप्त सप्त**
**लेख्या लेख्यान्यग्निभाद्भानि तत्र।**
**विद्धं खेटेनैकरेखास्थितेन**
**यत्तत्त्याज्यं साभिजित्यत्र चक्रे ॥ ४९ ॥**

ऊर्ध्वमिति। ऊर्ध्वं तिर्यक् च सप्त सप्त रेखा लेख्याः। तत्रैशान दिशमारभ्य रेखाग्रेषु अग्निभात् कृत्तिकानक्षत्रमारभ्याष्टाविंशतिनक्षत्राणि लेख्यानि। अभिजित्सहिते सप्तशलाकाचक्रे एकरेखास्थितेन ग्रहेण यन्नक्षत्रं विद्धं तत्त्याज्यम्। सप्तनक्षत्रेषु महाविन्यस्य यस्मिन्नक्षत्रे ग्रहो वर्तते तन्नक्षत्ररेखायाः प्रान्तस्थं नक्षत्रं तेन ग्रहेण विद्धमित्यर्थः। यथा—कृत्तिकास्थेन ग्रहेण श्रवणो विद्धः। श्रवणस्थेनापि कृत्तिका विद्धेति ॥

अथ चरणवेधमाह—

**तत्राद्यतुर्ययोर्वेधः पादयोर्द्वित्रितुर्ययोः।**
**असद्विद्धं त्यजेत्सर्वं सद्विद्धं त्वङ्घ्रिगं क्वचित् ॥ ५० ॥**

तत्राद्येति। यथा—प्रथमचरणस्थे ग्रहे चतुर्थचरणो विद्धः। चतुर्थे च प्रथमो विद्धः। एवं द्वितीयचरणस्थे ग्रहे तृतीयश्चरणो विद्धः। तृतीयस्थे च द्वितीय इति ॥ असद्भिः पापैर्ग्रहैर्विद्धं नक्षत्रं सर्वं त्यजेत्। सद्भिः सौम्यग्रहैर्विद्धं तु अङ्घ्रिगं पादमात्रं त्यजेत्। अत्र क्वचिच्छब्देन केश्चित्पापग्रहेऽपि चरणवेध उक्त इति सूचितम् ॥ उक्तं च—"नृक्षं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत्। क्रूरैस्तु सकलं त्याज्यमिति

वेधस्य निश्चयः ॥ वेधमाद्यन्त्ययोरूच्चोरन्योन्यं द्वित्रितीययोः । क्रूरैरपि त्यजेत्पादं केचिद्दुर्महर्षयः ॥" इति ॥

अथोद्देशपूर्वकं षड्वर्गफलमाह—

**गृहहोराद्रेष्काणाङ्कांशार्कांशास्तथा त्रिंशः ।**
**षडिमे कथिता वर्गाः शुभाऽशुभाः स्युः शुभाशुभान्वयतः॥५१**

गृहहोरेति । गृहं राशिः । होरा राश्यर्धम् । द्रेष्काणस्त्र्यंशः । अङ्कांशो नवांशः । अर्कांशो द्वादशांशः । त्रिंशस्त्रिंशांशः । इमे षड्वर्गाः कथिताः ॥ तेच शुभाशुभान्वयतः शुभाशुभग्रहयोगात् शुभाशुभाः स्युः । शुभग्रहयोगाच्छुभा अशुभग्रहयोगादशुभा इत्यर्थः ॥

अथोद्दिष्टान्वर्गानाह—

**भेशा भौमास्फुजिज्ज्ञेन्दिनबुधकविभौमेज्यसौर्यर्कजेज्या-**
**स्त्र्यंशाः किप्वङ्कपानां क्रियमृगतुलकीटादिगोंशोर्कभागाः ।**
**स्वस्मात्त्रिंशाः सितज्ञेज्यरविजकुभुवां पञ्चसप्ताष्टपञ्चा-**
**क्षांशा युज्यन्यथौजेयुजिशशिरविहोराऽन्यथौजेऽङ्कवर्गाः॥५२**

भेशा इति । भौमादयो भेशा राशिस्वामिनः । यथा—मेषस्य भौमः स्वामी । वृषस्यास्फुजिच्छुक्रः । मिथुनस्य ज्ञो बुधः । कर्कस्येन्दुश्चन्द्रः । सिंहस्येनः सूर्यः । कन्याया बुधः । तुलायाः शुक्रः । वृश्चिकस्य भौमः । धनुषो गुरुः । मकरस्य कुम्भस्य च शनिः । मीनस्य गुरुरिति गृहाख्यो वर्गः ॥ किप्वङ्कपानां प्रथमपञ्चमनवमाधिपानां त्र्यंशा ज्ञेयाः । राशेः प्रथमस्त्र्यंशः प्रथमराश्यधिपस्यैव । द्वितीयस्त्र्यंशः पञ्चमराशीश्वरस्य । तृतीयस्त्र्यंशो नवमराशीश्वरस्येत्यर्थः । यथा—मेषराशौ प्रथमो भौमस्य द्वितीयो रवेस्तृतीयो गुरोरिति द्रेष्काणाख्यो वर्गः । एवं वृषभराशौ प्रथमः शुक्रस्य द्वितीयो बुधस्येत्यादि ॥ गोंशो नवांशः·क्रियमृगतुलकीटादि यथा स्यात्तथा ज्ञेयः । अत्रादिशब्दः प्रत्येकं सम्बध्यते । क्रियो मेषस्तदादिको मेषराशेर्नवांशः । मकरादिर्वृषभस्य । तुलादिर्मि-

थुनस्य। कर्कादिः कर्कस्य। एवं मेषादिः सिंहस्य। मकरादिः कन्यायाः। इत्यादि पुनरपि योज्यम्। अयं नवांशाख्यो वर्गः॥ अर्कभागो द्वादशांशः स्वस्मात्स्वराशित एव ज्ञेयः। मेषस्य मेषादितो वृषभस्य वृषभादित इत्यादिरित्यर्थः। यथा—मेषस्य प्रथमो द्वादशांशो भौमस्य। द्वितीयः शुक्रस्य। तृतीयो बुधस्येत्यादि। एवं वृषभराशौ शुक्रबुधादिक्रमेण। अयं द्वादशांशाख्यो वर्गः॥ युजि समराशौ पञ्चसङ्ख्याकास्त्रिंशाः सितस्य शुक्रस्य। ततः सप्त बुधस्य। ततोऽष्टौ गुरोः। ततः पञ्च शनेः। ततः पञ्चांशा भौमस्य। ओजे विषमराशौ अन्यथा अस्माद्विपरीतं गणनीयम्। यथा—आदौ पञ्च भौमस्य। ततः पञ्च शनेः। ततोऽष्टौ गुरोः। ततः सप्त बुधस्य। ततः पञ्च शुक्रस्य। अयं त्रिंशांशसंज्ञो वर्गः॥ युजि समराशौ शशिरविहोरा। प्रथमा होरा चन्द्रस्य। द्वितीया सूर्यस्य। ओजे विषमराशौ अन्यथा। प्रथमा सूर्यस्य द्वितीया चन्द्रस्येत्यर्थः। अयमङ्गवर्गः षड्वर्गः। कथित इति शेषः। अत्रैकस्य राशेर्भागास्त्रिंशत्। दशभागमितो द्रेष्काणः विंशतिलिप्त्यधिकभागत्रयमितो नवांशः। सार्धभागद्वयमितो द्वादशांशः। एकभागमितस्त्रिंशः। पञ्चदशभागमिता होरा भवति॥

अथेष्टसमये लग्नानयनमाह—

**लग्नस्येष्टनवांशात्पूर्वनवांशान्दशगुणान्कृत्वा।**
**भक्त्वा त्रिभिर्लवाद्यं गतराशियुतं तनु स्पष्टम्॥ ९३॥**

लग्नस्येति। पूर्वश्लोकोक्तप्रकारेण लग्नस्य य इष्टो नवांशोऽङ्गीकृतस्तस्मात्पूर्वे नवांशा यावन्तः स्युस्तान् दशगुणान्कृत्वा त्रिभिर्भक्त्वा यल्लब्धं तल्लवाद्यम्। अंशकला विकलात्मकं भुक्तराशियुतं स्पष्टं तनु स्यात्॥ यथा—सिंहस्य लग्नस्येष्टनवांशः षष्ठः सौम्यदेवताकः। तस्मात्पूर्वनवांशाः ५ दशगुणाः ५० त्रिभिर्भक्ताः १६।४०।० इदमंशाद्यं गतराशिभिर्युक्तं ४।१६।४०।० जातं स्पष्टं लग्नम्॥

अथ मेषादीनां स्वोदयानाह—

गजतुरगयमा नवाङ्कदस्रा
दहनरदाः स्युरजात्क्रमोत्क्रमस्थाः ।
तदनु चरदलैः क्रमोत्क्रमस्थै
रहितयुता उदयाः पलानि मेषात् ॥ ९४ ॥

एते उदया अजान्मेषात्क्रमोत्क्रमस्थाः स्युः ॥ यथा—मेषस्य गजतुरगयमाः २७८ वृषस्य नवाङ्कदस्राः २९९ मिथुनस्य दहनरदाः ३२३ क्रमस्था एते उत्क्रमस्था विपरीताश्चेत्कर्कादीनां स्युः । कर्कस्य ३२३ सिंहस्य २९९ कन्यायाः २७८ ॥ तदनु पश्चात् एते क्रमोत्क्रमस्थैस्त्रिभिश्चरखण्डैर्हीना युताश्च कार्याः । चरखण्डानि तु प्रागुक्तानि । यथास्मद्देशे चरखण्डानि ३९।२८।१२ एतैः क्रमेण रहिताः। मेषस्य २४३ वृषस्य २७१ मिथुनस्य ३११ उत्क्रमस्थैश्चरखण्डैः १३। २८।३९ युताः । कर्कस्य ३३९ सिंहस्य ३२७ कन्यायाः ३१३ एत एवोत्क्रमेण तुलादीनां स्युः । तुलायाः ३१३ वृश्चिकस्य ३२७ धनुषः ३३९ मकरस्य ३११ कुम्भस्य २७१ मीनस्य २४३ एते मेषादीनां पलात्मकाः स्वोदयाः स्युः ॥

अथ लग्नादिष्टकालानयनमाह—

सायनांशरविभोग्यलवघ्नः
स्वोदयोऽभ्रगुणहृद्रविभोग्यः ।
लग्नभुक्तसमयेन तदन्त-
स्थोदयैश्च युत इष्टपलानि ॥ ९५ ॥

सायनेति । अयनांशसहितस्य रवेर्ये भोग्यांशास्तैर्गुणितः स्वोदयोऽभ्रगुणहृत्त्रिंशद्भक्तः । लब्धं रविभोग्यकालः पलात्मको भवति । एवमेव लग्नस्य भुक्तकालः साध्यः अनेन रविभोग्यकालो युक्तः तदन्तस्थोदयैः सायनरविलग्नान्तरालोदयैश्च युतः इष्टपलानि स्वेष्टकालः पलात्मको भ-

वतीत्यर्थः। यथा—रविः १।४।३०।१३ अयनांशाः २१।१ सायनांशो रविः १।२५।३१।१३ अस्य भोग्यांशाः ४।२८।४७ एभिः स्वोदयो वृषभाख्यो २७१ गुणितः १२१४।०१७ त्रिंशद्भक्तः ४० जातो रविभोग्यः पलात्मकः। अथ लग्नं ४।१६।४०।० सायनं ५।७।४१।० अस्य भुक्तांशाः ७।४१।० एभिः स्वोदयः कन्याख्यो ३१३ गुणितः २४०४।५३।० त्रिंशद्भक्तः ८० अयं लग्नभुक्तः समयः पलात्मकः अनेन रविभोग्यो ४० युक्तः १२० अयमन्तस्थोदयैर्मिथुनकर्कसिंहाख्यैर्युक्तः १०९३ इमानीष्टपलानि षष्टिभक्तानि चेज्जाता इष्टघटिकाः १८।१३ अयमिष्टदिने सिंहलग्नस्य कन्यांशे भुक्तकालो ज्ञेयः॥

**लग्नार्कौ सायनावेकगृहे चेदुदयास्तयोः।**
**अन्तरघ्नः खाग्निभक्तः कालः सूर्योदयोत्तरम्॥ ५६॥**

लग्नार्काविति। सायनलग्नं सायनरविश्चैकराशौ चेत्तर्हि तयोर्लग्नार्कयोरन्तरघ्नः विश्लेषेण हतः स्वोदयः खाग्निभक्तः सूर्योदयोत्तरमिष्टकालः स्यात्॥ यथा—सायनलग्नं १।२७।४१।० सायनार्कः १।२५।३१।१३ अनयोरन्तरं २।९।४७ अनेन वृषभोदयो २७१ गुणितः ५८६ खाग्निभक्तः १९ जातः सूर्योदयोत्तरमिष्टकालः पलात्मकः॥

अत्र विशेषमाह—

**न्यूनं यदाऽर्कतो लग्नमर्वाक् सूर्योदयात्तदा।**
**रात्रौ तु षड्युक्तार्कादिष्टकालो भवेदिति॥ ५७॥**

न्यूनमिति। यदाऽर्कतः सायनसूर्यात् सायनलग्नं न्यूनं तदा 'अन्तरघ्नः' इत्यादिना साधित इष्टकालः सूर्योदयात् प्राक् ज्ञेयः। अयमर्थः—आगत इष्टकालः प्राग्दिनीयरात्रिमानमध्ये शोध्यः प्राग्दिनीयसूर्यास्तानन्तरमेतावानिष्टकालः स्यात्। यथा—सायनार्कः १।२५।३१।१३ सायनलग्नं १।२२।११।० इदमेकराशौ रवितो न्यूनमतस्तयोः 'अन्तरघ्नः' इत्यादिना साधित इष्टकालः पलानि ३० अयं पूर्वरात्रि-

माने २८।६ पातितः २७।३६ जातः पूर्वरात्रौ सूर्यास्तादिष्टकालः । अथ रात्रौ विशेषमाह—रात्राविति । रात्रौ षड्युक्तार्कात् षड्राशियुतात्सायनसूर्यादिष्टकालः इत्येवं प्रकारेण ॥ एवमानीते इष्टकाले पञ्चपलानि योज्यानीति सम्प्रदायः ॥

**यानवेशननृपासनचूडामौञ्जिबन्धनकरग्रहणादौ ।**
**यन्त्रशङ्कुचरताम्रघटीभिः साधयेदखिलकर्मणि कालम्॥५८॥**

यानवेशनेति । यानं यात्रावेशनम् । नृपासनं राज्याभिषेकः । इत्याद्यखिलकर्मणि तुरीययन्त्रादिभिः कालं साधयेत् । ताम्रघटीस्थापनमाह नारदः—"ताम्रपात्रे जलैः पूर्णे गन्धपुष्पैरलङ्कृते । तण्डुलस्थे रत्नयुते शुचिभूमावहर्पतेः ॥ मण्डलार्धोदयं वीक्ष्य जलयन्त्रं विनिक्षिपेत् ॥" इति ।

अथ व्रतबन्धे लग्नभङ्गयोगानाह—

**वर्ज्याः षष्ठाष्टमस्थाने लग्नपेन्द्वीज्यभार्गवाः ।**
**लग्नाष्टपञ्चगाः पापाः शुक्रेन्दू व्ययगावपि ॥ ५९ ॥**

वर्ज्या इति । लग्नात्षष्ठाष्टमस्थाने लग्नाधिपतिचन्द्रगुरुभार्गवा वर्ज्याः । लग्नेऽष्टमे पञ्चमे च पापा वर्ज्याः । द्वादशे शुक्रचन्द्रौ वर्ज्यौ ॥

अथ लग्नशुद्धिमाह—

**व्रते ग्राह्या द्वादशाष्टषड्वर्ज्याः शुभखेचराः ।**
**पापास्त्र्यायारिगाः शुक्ले गोकर्कगस्तनौ विधुः ॥ ६० ॥**

व्रत इति । व्रतबन्धे द्वादशाष्टमषष्ठस्थानानि वर्जयित्वा स्थानान्तरे शुभखेचरा ग्राह्याः । तृतीयैकादशषष्ठस्थाः पापग्रहा ग्राह्याः । शुक्लपक्षे तनौ लग्ने वृषकर्कस्थश्चन्द्रो ग्राह्यः ॥

अथ वर्णेशानाह—

**विप्रार्यीशावीज्यशुक्रौ क्षत्रेशावर्कभूमिजौ ।**
**वैश्यशूद्रान्त्यजाधीशाश्चन्द्रज्ञशनयः क्रमात् ॥ ६१ ॥**

क्षत्रेशौ क्षत्रियाधीशौ सूर्यभौमौ । वैश्याधीशश्चन्द्रः । शूद्राधीशो बुधः । अन्त्यजाधीशः शनिः ॥

अथ शाखेशानाह—

**ऋगादीशा जीवशुक्रारज्ञास्तद्वारलग्नयोः ।**
**शस्तो वेदेशसूर्येन्दुजीवेषु सबलेष्वपि ॥ ६२ ॥**

ऋगादीनामीशा जीवादयो यथा—ऋग्वेदेशो गुरुः । यजुर्वेदेशः शुक्रः । सामवेदेशो भौमः । अथर्वेशो बुधः ॥ अथात्रैतत्प्रयोजनमाह—तद्वारेति । स्वस्ववर्णेशवेदेशयोर्वारे लग्ने च व्रतबन्धः शस्तः । तथा वेदेशस्य सूर्यशशिगुरूणां च बले व्रतबन्धः शुभ इत्यर्थः ॥

अथ वेदविशेषेण नक्षत्राण्याह द्वाभ्याम्—

**ऋग्वेदिनां मूलपूर्वाश्लेषार्द्रेन्दुकरत्रये ।**
**यजुर्विदां ध्रुवान्त्येज्यमित्रादित्येन्दुहस्तभे ॥ ६३ ॥**

व्रतबन्धः शस्त इति पूर्वेणान्वयः ॥ तत्र पूर्वास्तिस्रः । करत्रयं हस्तचित्रास्वात्यः । आदित्यं पुनर्वसुः ॥

**सामगानामुत्तराश्विवसवीज्येशकरश्रुतौ ।**
**अथर्वणां च वस्वन्त्यलघुमूलादितीन्दुभे ॥ ६४ ॥**

उत्तरास्तिस्रः । ईश आर्द्रा । करो हस्तः ॥

अथानध्यायानाह—

**अनध्यायाः स्मृता भूतत्रयाष्टम्यर्कसङ्क्रमः ।**
**शुक्लद्वीशार्कदिक्तिथ्यः शुक्रपौषतपः शुचेः ॥ ६५ ॥**

भूतत्रयं चतुर्दशीपूर्णिमाप्रतिपदः । अमावास्यापि तन्मध्ये वर्तते । अष्टमी रविसङ्क्रान्तिश्चानध्यायाः । शुक्रादिमासानां शुक्लपक्षे क्रमेण द्वीशादितिथयोऽनध्यायाः । यथा—ज्येष्ठस्य शुक्ले द्वितीया । पौषस्य शुक्ले एकादशी । माघशुक्ले द्वादशी । आषाढस्य दशमीति ॥

जन्मस्थो दशमश्च पूजामर्हति । पूजाविधानेन शुभ इत्यर्थः । इतरत्र चतुर्थाष्टमद्वादशस्थानेषु स्थितोऽतिनिन्द्योऽतिनिषिद्धः ॥

अथ गुरुदोषस्यापवादमाह—

**स्वमित्रभवनांशेषु स्वोच्चे वर्गोत्तमे गुरुः ।**
**गोचरेऽनिष्टगोपीष्टोऽन्यथा त्विष्टोप्यनिष्टकृत् ॥ ७२ ॥**

गोचरे गुरुरनिष्टगश्चतुर्थाद्यनिष्टस्थानस्थितोपि स्वमित्रभवनांशेषु स्वस्य मित्रस्य च भवनेष्वंशेषु च स्थित इष्टः । तत्र स्वस्य भवने धनुर्मीनाख्ये मित्रस्य मङ्गलादेर्भवने मेषादौ तदंशे च स्थितः शुभ इत्यर्थः । तथा स्वोच्चे कर्के तथा वर्गोत्तमे यथा वृषभराशौ वृषभनवांशो वर्गोत्तमस्तत्र स्थित इष्टः। वर्गोत्तमलक्षणं तु—"वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यान्त्याः" इति । अन्यथा शत्रुभवने नीचभवने च स्थितः इष्टोप्यनिष्टकृत् । द्वितीयादिस्थानस्थितोप्यशुभ इत्यर्थः । तत्र नीचभवनं मकरः शत्रुभवनं मिथुनादि ॥

अथ मेषादिके लग्ने सति क्रमेण फलमाह—

**मूकः श्रुतिमान्वक्ता मूढः क्रूरो धनान्वितो गुणवान् ।**
**क्रूरः पूज्यः पिशुनः प्रेष्यो धीमानजादिके लग्ने ॥ ७३ ॥**

मेषलग्न उपनीतो बटुर्मूको वचनविकलः । वृषे श्रुतिमान् श्रवणसंपन्नः । पिशुनः खलः । प्रेष्यः सेवकः ॥

केन्द्रस्थानां सूर्यादीनां क्रमेण फलमाह—

**राजसेवी वणिग्वृत्तिः शास्त्रधृग्वेदपाठकः ।**
**प्राज्ञोऽर्थवान्नीचसेवी केन्द्रस्थैर्भास्करादिभिः ॥ ७४ ॥**

स्पष्टम् ॥

अथ सूर्यांशफलमाह—

**क्रूरजडपापिपटुः षट्कर्मपरः क्रतूपतो मूर्खः ।**
**भवति बटुर्यदि लग्ने नवमांशा भास्करादीनाम् ॥ ७५ ॥**

षट्कर्माणि यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहास्तत्र तत्परः। षट्कर्मपरः। क्रतूलतो दीक्षितः। शेषं स्पष्टम् ॥

**शुक्रजीवशशिनश्च भानुना भूमिजेन शशिना शुभेन वा।**
**संयुता यदि भवन्ति निर्गुणः क्रूरनिर्घृणपटुर्वटुः क्रमात्॥७६॥**

शुक्रो गुरुः शशी वा सूर्येण संयुतश्चेद्भवति तदा वटुर्निर्गुणः स्यात्। भौमेन संयुतश्चेत्क्रूरः स्यात्। शशिना संयुतश्चेन्निर्घृणो निर्लज्जः स्यात्। शुभेन शुभग्रहेण युक्तश्चेत्पटुर्विद्यानिपुणः स्यात् ॥

**गुरौ लग्ने चन्द्रे वृषतुलनवांशे सति सिते**
**त्रिकोणे या विद्या जगति सकलास्तस्य वशगाः।**
**यदा योगेऽप्यस्मिन्मकरकलशांशे शशधर-**
**स्तदा विद्याहीनः स तु परमदीनत्वमयते ॥ ७७ ॥**

लग्ने गुरौ सति वृषतुलनवांशस्थे चन्द्रे सति त्रिकोणस्थे शुक्रे सति जगति याः सर्वा विद्यास्तास्तस्य वटोर्वशा भवन्ति। अस्मिन्योगे सत्यपि यदा तु मकरांशे कुम्भांशे वा चन्द्रस्तर्हि स वटुर्विद्याहीनः सन् परमदीनत्वं गच्छति ॥

**मूढनीचविजितारिगृहस्थान्वेदवर्णपतिभार्गवजीवान्।**
**वर्जयेन्निजगृहोच्चनवांशस्थायिनः पुनरमी न च वर्ज्याः॥७८॥**

वेदपतिः शाखेशो बृहस्पत्यादिः प्रागुक्तः। वर्णपतिः गुरुशुक्रादिः प्रागुक्तः। भार्गवः शुक्रः। जीवो बृहस्पतिः एतान्मूढानस्तंगतान् तथा नीचस्थाने स्थितान् तथा विजितान् युद्धे पराजितान् तथा अरिगृहे शत्रुस्थाने स्थितान् व्रतबन्धे वर्जयेत्। बह्वृचादीनां भार्गवजीवग्रहणेनैव वर्णेशशाखेशग्रहणे सिद्धे पृथग्ग्रहणं सामगादीनां भौमादिग्रहणार्थम्। अमी वेदेशादयः स्वगृहस्य स्वोच्चस्य वा नवांशे तिष्ठन्ति चेन्नैव वर्ज्या इत्यर्थः ॥

**रात्रौ लग्नात्पङ्त्रिगोऽर्को भवत्यह्नि दशायगः ।**
**श्रेयानुपचयेष्वर्कः कथमुक्तः परैर्व्रते ॥ ७९ ॥**

अर्कः सूर्यः लग्नात् षष्ठतृतीयस्थानस्थितः रात्रौ भवति । न तु दिवा । दशमैकादशस्थाने तु दिवा तिष्ठति । एवं सति परैः केशवदैवज्ञादिभिः उपचयेषु षट्त्र्यादिस्थानेषु स्थितोऽर्कः श्रेयानिति कथमुक्तम् । तच्चिन्त्यमित्यर्थः ॥

**यैरष्टषष्ठगः शुक्रो व्रते नेष्ट इतीरितम् ।**
**द्वादश्यां ग्रहणे किं तैः पारणा न व्यवस्थिता ॥ ८० ॥**

यैर्दैवज्ञैरष्टषष्ठस्थानस्थितः शुक्रः व्रते नेष्ट इत्युक्तं तस्यापराह्णात्पूर्वमसंभवात् तैर्हेतुभूतैः कृत्वा द्वादश्यां ग्रहणे निमित्ते सति उपोषणस्य पारणा न व्यवस्थिता किम् । सर्वथैतद्दुर्घटमित्यर्थः ॥

अथ कथमपि गतिर्वक्तव्येति चेद्गतिमाह—

**इत्याद्यसहिते कालातिक्रमे वा व्यवस्थितम् ।**
**पुनः संस्कारविषये किं वैतदुपपद्यते ॥ ८१ ॥**

इत्यादि पूर्वश्लोकद्वयोक्तप्रकारादिकं अतिसंकटे मुख्यकालातिक्रमे वा व्यवस्थितम् । अथवा पुनःसंस्कारविषये तद्युज्यते । पुनःसंस्कारस्य नैमित्तिकत्वेन निमित्तानन्तरमेव रात्रावपि प्राप्तेः ॥

**चन्द्रे पापांशगते भवति दरिद्रः शुभांशगे विद्वान् ।**
**दुःखी वटुर्निजांशे श्रोत्रादित्रिभे सुखी निजांशेऽपि ॥८२॥**

यस्मिन्कस्मिन्राशौ चन्द्रो यदि पापग्रहराशिनवांशे स्थितस्तदा वटुर्दरिद्रः स्यात् । शुभग्रहराशिनवांशे चेत्तदा वटुर्विद्वान् स्यात् । यदि चन्द्रो निजांशे कर्कांशे चेत्तदा वटुर्दुःखी स्यात् । निजांशगतस्यापवादमाह—श्रोत्रेति । कर्कांशेऽपि चन्द्रे श्रवणपुनर्वसुनक्षत्रयोरुपनयनं चेद्वटुः सुखी स्यात् । श्रवणस्य पुनर्वसोश्च चतुर्थचरणः कर्कांशो भवति तत्रेत्यर्थः ॥

**चेद्वृद्धिश्राद्धतोऽप्यूर्ध्वं जननी पुष्पिता भवेत् ।**
**नेष्टाश्चौलव्रतोद्वाहाः शान्त्याः कार्या असम्पदि ॥ ८३ ॥**

वृद्धिश्राद्धतः नान्दीश्राद्धादप्यूर्ध्वं संस्कार्यस्य जननी पुष्पिता पुष्पवती भवेच्चेत् तदा चौलव्रतबन्धविवाहाः असम्पदि मुहूर्तान्तराभावे धर्मशास्त्रोक्तशान्त्या कार्याः । अन्यथा नेष्टाः । उक्तं च—"अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते । श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत्॥" इति ॥

अथ छुरिकाबन्धनमुहूर्तमाह—

**छुरिकाबन्धनं राज्ञां स्यात्समावर्तनोत्तरम् ।**
**व्रतोक्तसमये त्यक्त्वा चैत्रभौमास्तभूमिजान् ॥ ८४ ॥**

राज्ञां क्षत्रियाणां समावर्तनोत्तरं विवाहतः पूर्वं छुरिकायाः अल्पशस्त्रविशेषस्य बन्धनम् । कट्यामिति शेषः ॥ तच्चैत्रमासं भौमास्तं भौमवारं च वर्जयित्वा व्रतोक्तसमये व्रतबन्धोक्तमासतिथिवारनक्षत्रादौ स्यात् ॥

अथ गोदानमुहूर्तमाह—

**केशान्तकर्म किल चौलनियुक्तकाले**
**युक्तं व्रतोक्तसमयेऽथ समावृतिश्च ।**
**इत्थं वसिष्ठमुखशिष्टवरैः प्रदिष्टं**
**संस्कारकर्म सुतशर्म करोति पुंसाम् ॥ ८५ ॥**

चौलनियुक्तकाले चौलकर्मण्युक्तमासतिथ्यादौ केशान्तकर्म गोदानाख्यः संस्कारः स्यात् । तच्च ब्राह्मणस्य षोडशवर्षे विहितम् । अथ समावृतिः समावर्तनम् । 'वृञ् वरणे' इत्यस्मात् क्तिन् ॥ व्रतोक्तसमये व्रतबन्धोक्ततिथिमासादौ स्यात् । इत्थमुक्तप्रकारेण वसिष्ठनारदादिशिष्टवरैः कथितं संस्कारकर्म पुंसां सुतशर्म पुत्रकल्याणं करोति ॥ शर्मशब्दः प्रकरणान्ते मङ्गलार्थः ॥

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्तरसात्मजः ।**
**संस्कारोक्तमुहूर्तानां रघुनाथो निरूपणम् ॥ ८६ ॥**

स्पष्टम् ॥

इति मुलस्थानकरोपाह्वभट्टरामचन्द्रसुतश्रीमन्महेश्वरभट्टविरचितायां मुहूर्तमालाटीकायां सौन्दर्यबोधिन्यां संस्कारप्रकरणं षष्ठम् ६

---

## विवाहप्रकरणम् ७

अथ विवाहप्रकरणं व्याख्यायते । तत्र सर्वाश्रमाणामुपकारकत्वात्स-मावर्तनानन्तरं गृहस्थाश्रम एव मुख्यः स च सुशीलभार्यया सिद्ध्यति सुशील च विवाहमुहूर्ताधीनं अतो मुहूर्तशुद्धिं प्रतिजानीते—

**हेतुर्धर्मार्थकामानां भार्या सच्छीलशालिनी ।**
**विवाहकालशुद्ध्या सच्छीलं तस्माद्ब्रवीमि ताम् ॥ १ ॥**

सच्छीलेन भर्त्रादीनामनुकूलस्वभावेन शालते शोभते एवंशीला भार्या धर्मार्थकामानां त्रिवर्गस्य हेतुः साधनं भवति । सच्छीलं तु विवाहकालशुद्ध्या निष्पद्यते । अतस्तां कालशुद्धिं ब्रवीमि ॥ यदाह सत्याचार्यः—"शुभक्षणक्रियारम्भजनिताभूतसम्पदः । सम्पदः सर्वलोकानां ज्योतिस्तत्र प्रयोजनम् ॥" इति ॥

अथाष्टकूटान्युद्दिशति—

**वर्णो वश्यं तारा योनिर्ग्रहमित्रता च गणशुद्धिः ।**
**राश्योः कूटं नाडीत्यष्टाविमे गुणाधिकाः क्रमशः ॥ २ ॥**

राश्योरिति द्विवचनं वधूवरराश्यभिप्रायेण । राशिकूटनिर्देशः । एते वर्णादयोऽष्टौ क्रमशो गुणाधिकाः एकैकगुणेनाधिकाः स्युः । यथा—वर्णानुकूल्ये एको गुणः । वश्ये द्वावित्यादि ॥

तत्रादौ वर्णकूटमाह—

**अलिझषकर्का विप्रास्तदनु क्षत्रा विशः शूद्राः ।**
**अनुलोमाः शुभफलदा न प्रतिलोमा वधूवरयोः ॥ ३ ॥**

वृश्चिकमीनकर्का ब्राह्मणाः । तदनु तदनन्तरं धनुर्मेषसिंहाः क्षत्रियाः । तदनु मकरवृषकन्या वैश्याः । कुम्भमिथुनतुलाः शूद्राः । अत्रानुलोमा वर्णा वधूवरयोः शुभफलदाः । वधूवरराश्योर्वर्णौ ज्ञात्वा हीनवर्णा सदृग्वर्णा वा वधूः प्रशस्तेति ज्ञेयमिति भावः । प्रतिलोमा वरवर्णादधिकवर्णा न शुभफलदाः । उत्तमवर्णे वरे एको गुणः । सदृग्वर्णेऽर्धगुणः । हीनवर्णे वरे गुणाभावः ॥

वश्यकूटमाह—

**सिंहं विना नृणां सर्वे वश्या भक्ष्याश्च तोयजाः ।**
**सिंहस्य वश्यास्सवत्वालिं सर्वेऽन्यल्लव्यवहारतः ॥ ४ ॥**

नृणां नरराशीनां मिथुनकन्यातुलानां सिंहं विना मेषाद्याः सर्वे राशयो वश्याः । ननु जलचराणां सहानवस्थानात्कथं वश्यत्वमत आह—तोयजा भक्ष्या इति । नरराशीनां मकरकुम्भमीनकर्का भक्ष्याः । किं पुनर्वश्या इत्यर्थः । सिंहस्य वृश्चिकं विना सर्वे वश्याः । अन्यदनुक्तं चतुष्पदानां जलचराणां च वश्यावश्यत्वं व्यवहारतो लोकव्यवहाराज्ज्ञेयमित्यर्थः । यथा—नरराशेर्नृपो वश्य इति । अत्र वरराशेः स्त्रीराशौ वश्ये सति गुणद्वयम् । भक्ष्ये सति एको गुणः । वैपरीत्ये गुणाभावः ॥ राशिरूपं बृहज्जातकादवगन्तव्यम् ॥

ताराकूटमाह—

**ताराकूटं वरभात्कन्याभं वरभमत्र कन्याभात् ।**
**गणयेन्नवभिस्तष्टं त्रिपञ्चसप्तोन्मितं न शुभम् ॥ ५ ॥**

---

१ मत्स्यौ घटी नृमिथुनं सगदं सवीणं चापी नरोऽश्वजघनो मकरो मृगास्यः । तौली ससस्यदहना प्लवगा च कन्या शेषाः स्वनामसदृशाः स्वचराश्च सर्वे ॥१॥

देवमनुष्यगणयोर्दम्पत्योर्मध्यमा प्रीतिः स्यात् । देवराक्षसगणयोर्वैरम् । मानवराक्षसगणयोर्मृत्युः । 'प्रबलो दुर्बलं हन्ति' इति न्यायेन मानवगणस्यैव नाशः । तत्रापि "रक्षोगणः पुमान् चेत्स्यात्कन्या भवति मानवी । केऽपीच्छन्ति तदोद्वाहं व्यस्तं कोऽपीह नेच्छति ॥" इति विशेषो ज्ञेयः । अत्र नरराक्षसयोर्महद्वैरं तत्र गुणाभावः । देवराक्षसयोर्वैरं तत्रैको गुणः । देवमनुष्यत्वे पञ्च । गणैक्यत्वे षट् ॥

राशिकूटमाह—

स्त्रीराशेः पतिराशिश्चेद्द्वादशः पञ्चमोऽष्टमः ।
व्यस्तयो वा तदा नैस्स्व्यमप्रजत्वं मृतिः क्रमात् ॥ १३ ॥

स्त्रीराशेः पतिराशिर्द्वादशश्चेत्तदा नैस्स्व्यं दारिद्र्यम् । पञ्चमश्चेदप्रजत्वमपत्यराहित्यम् । अष्टमश्चेन्मृतिर्मृत्युः । व्यस्तयो वा । पतिराशेरपि स्त्रीराशिर्द्वादशः पञ्चमोऽष्टमश्चेत्तदापि दारिद्र्यमप्रजत्वं मृतिः क्रमात्फलम् । कश्चित्तु "विषमात्कन्यकाराशेः षष्ठं षष्ठाष्टमं न सत् । समात्षष्ठं शुभं ज्ञेयमष्टमं शुभं इष्यते ॥" इति विशेषोक्ति द्विर्द्वादशादिदुष्टभकूटे गुणाभावः । सद्भकूटे सप्त गुणाः ॥

अथ नाडीकूटमाह द्वाभ्याम्—

अनामिकायां मध्यायां तर्जन्यां च पुनः पुनः ।
आरोहेणावरोहेण न्यसेद्धान्यश्विभात्क्रमात् ॥ १४ ॥

अनामिकामध्यमातर्जनीषु अश्विन्यादिनक्षत्राणि क्रमादारोहावरोहाभ्यां पुनःपुनर्न्यसेत् । यथा—अनामिकायामश्विनीं मध्यमायां भरणीं तर्जन्यां कृत्तिकां न्यस्य पुनस्तर्जन्यां रोहिणीं मध्यायां मृगशिरः अनामिकायामार्द्रां पुनरनामिकायां पुनर्वस्वित्यादिक्रमेण पुनः पुनर्न्यसेत् । एकाङ्गुलौ तुल्यां नाडीं वर्जयेत् ॥

एकस्मिन्नङ्के स्यातां दम्पत्योर्जन्मभे यदि ।
एकनाडीति निर्दिष्टं मध्यनाडी तु मृत्युदा ॥ १५ ॥

इतरपादजौ वधूवरौ क्रमाच्छ्वशुरौ हतः । श्वश्रूश्च श्वशुरश्च श्वशुरौ । आश्लेषान्त्यचरणत्रयजाता कन्या वरो वा श्वशुरपत्नीं हन्ति । मूलाद्यपादत्रयोत्पन्नौ तु तौ श्वशुरं हत इत्यर्थः । तथा ज्येष्ठान्त्यचरणोत्पन्नौ वधूवरौ अन्योन्यस्याग्रजं हतः । कन्या पत्यग्रजं हन्ति । वरस्तु भार्याग्रजमित्यर्थः । तथा विशाखान्त्यपादजौ तौ परस्परस्यानुजं हत. । उक्तं च—"मूलान्त्यपादजौ श्रेष्ठौ तथाऽश्लेषाद्यपादजौ । द्वीशान्त्यपादजौ दुष्टौ तथा ज्येष्ठान्त्यपादजौ" इति ॥

**अज्ञातजन्मभानां तु व्यावहारिकनामभात् ।**
**विचारयेदिदं सर्वं सङ्करो मरणप्रदः ॥ २३ ॥**

न ज्ञातं जन्मनक्षत्रं येषां तेषां व्यवहारिकं यन्नाम तत्सूचितं नक्षत्रादिदं सर्वं वर्णवश्यादिकं राशिघटितं योनिमैत्र्यादि नक्षत्रघटितं च विचारयेत् । जन्मतो नक्षत्रं गृहीत्वा नामतो राशिं गृह्णाति नामतो नक्षत्रं गृहीत्वा जन्मतो वा राशिं गृह्णाति चेत्सङ्करः । स तु दु.खप्रद. ॥

**इत्थं मिथः स्याद्घटितार्थचिन्तने**
**निन्द्यो गुणैः षोडशभिः करग्रहः ।**
**मध्यो नखैस्तत्त्वमितैस्तथोत्तम-**
**स्ततोऽधिकश्चेत्पुनरुत्तमोत्तमः ॥ २४ ॥**

इत्थं परस्परं घटितार्थचिन्तने लब्धैर्वर्णवश्यादीनां षोडशभिर्गुणैर्विवाहो निन्द्यः । षोडशगुणपर्यन्तं न कर्तव्य इत्यर्थः । तत उपरि नखैर्विंशतिगुणैर्मध्य. । ततस्तत्त्वमितै. पञ्चविंशतिगुणैरुत्तमः । ततोऽधिकैस्तु गुणैः परमोत्तम इत्यर्थः । गुणाधिक्यलाभेऽपि एकनाड्या स्त्रीपुरुषयोः क्रमादसुरमनुष्यत्वे च सति विवाहो नैव कार्य इत्याहुरन्ये ॥

**विना गुरुबलं कन्या विना रविबलं वरः ।**
**विना चन्द्रबलं जातु न विवाह्यावुभावपि ॥ २५ ॥**

स्पष्टम् ॥

न ज्येष्ठयोर्विवाहः स्यान्मिथो ज्येष्ठे विशेषतः ।
ज्येष्ठेऽप्यन्यतरस्य स्यात्कृत्तिकार्कं विनाऽपदि ॥ २६ ॥

ज्येष्ठयोर्वधूवरयोर्मिथो विवाहो न स्यात् । ज्येष्ठे मासे तु ज्येष्ठयोर्विवाहो विशेषतो न स्यात् । नैव कर्तव्य इत्यर्थः । अन्यतरस्योभयोर्मध्ये एकतरस्य ज्येष्ठस्य सतो ज्येष्ठमासेऽपि स्यात् । आपदि सङ्कटे तु कृत्तिकास्थं सूर्यं त्यक्त्वा ज्येष्ठमासेऽपि ज्येष्ठवरस्य ज्येष्ठकन्यायाश्च विवाहः शुभ इत्यर्थः ॥

वाङ्निश्चयं सचित्रावसुहयहरिभिर्विवाहर्क्षैः ।
पुण्याहे शशिशुद्धौ कुर्यात्प्रथमं विवाहाङ्गम् ॥ २७ ॥

चित्राधनिष्ठाश्विनीश्रवणयुक्तैर्विवाहनक्षत्रैः ध्रुवमृगस्वात्यनुराधारेवतीमघामूलहस्तैः शुभवासरे चन्द्रबले च सति विवाहाङ्गं वाङ्निश्चयं प्रथमं कुर्यात् ॥

कन्यावृतिं वासवकर्णकृत्तिका
पूर्वासु पाणिग्रहणोक्तभेषु वा ।
कुर्याद्वरस्यापि वृतिं स्वशक्तितः
पूर्वात्रयाग्निध्रुवभैः शुभे दिने ॥ २८ ॥

धनिष्ठादिनक्षत्रेषु विवाहनक्षत्रेषु वा कन्यावृतिं वस्त्रालङ्कारफलपुष्पादिभिस्तोषणपूर्वकं कन्यावरणं वरभ्रात्रादिः कुर्यात् । तथा पूर्वात्रयकृत्तिकाध्रुवनक्षत्रे शुभे वारे स्वशक्तितः वस्त्रयज्ञोपवीतादिना वधूभ्रात्रादिर्वरस्यापि वृतिं वरणं कुर्यात् ॥

पौषचैत्रौ विना मार्गशीर्षाद्यष्टसु दोर्ग्रहः ।
आषाढशुक्लदशमीपर्यन्तं न ततः परम् ॥ २९ ॥

पौषचैत्रातिरिक्तेषु मार्गशीर्षाद्यष्टसु मासेषु दोर्ग्रहो विवाहः । शुभ इति शेषः । तत्रापि आषाढशुक्लदशमीपर्यन्तमेव । ततः परं न स्यात् ॥

मासि सौरे कैश्चिदुक्तः कैश्चिचान्द्रे करग्रहः ।
उत्तमो यत्र सम्पातो मासयोश्चान्द्रसौरयोः ॥ ३० ॥

कैश्चिद्गर्गादिभिः सौरे मासि विवाह उक्तः । कैश्चिन्नारदादिभिश्चान्द्रे मासि विवाह उक्तः । यत्र यस्मिंश्चान्द्रसौरयोरुभयोरपि लाभः स विवाह उत्तमः । अर्थादेकतरपक्षाश्रयणे मध्यमः ॥

कार्तिकपौषमधुष्वपि वृश्चिकमकराजगो रविर्ग्राह्यः ।
मीनस्थितोऽपि फाल्गुनमासेऽयं मध्यमः पक्षः ॥ ३१ ॥

कार्तिके वृश्चिकस्थः पौषे मकरस्थश्चैत्रे मेषस्थो रविर्विवाहनिर्णये ग्राह्यः। इद सौरमासिना मतम् । फाल्गुनमासे मीनस्थितोऽपि ग्राह्यः । इदं चान्द्रमासग्राहिणा मतम् । अयमेतच्छ्लोकोक्तः पक्षो मध्यमः । एकतरमताश्रयणात् ॥

विवाहः स्यात्तियौ दर्शरिक्तारिक्ते शुभे दिने ।
स्वातीपित्र्येन्दुमित्रान्त्यधातृमूलोत्तरार्कभैः ॥ ३२ ॥

दर्शोऽमावास्या । रिक्ताः ४ । ९ । १४ एतदतिरिक्ते तिथौ । शुभे दिने सौम्यग्रहवासरे । स्वातीमघामृगशीर्षानुराधारेवतीरोहिणीमूलोत्तरात्रयहस्तनक्षत्रैर्विवाहः स्यात् ॥

जन्ममासर्क्षतिथिषु ज्येष्ठे मासि च दोर्ग्रहः ।
न भवेदाद्यगर्भाणामितरेषां तु सौख्यदः ॥ ३३ ॥

जन्ममासादावाद्यगर्भाणां पुत्राणां कन्यानां च विवाहो न भवेत् । इतरेषामनाद्यगर्भाणां सौख्यदः । अत्र ज्येष्ठे मासि निषेधेन 'ज्येष्ठेऽप्यन्यतरस्य' इति प्रागुक्तस्यागतिविषयकत्वं ज्ञेयम् ॥

भुवनमितं सूर्यर्क्षाद्भुक्तं भोग्यं ह्यधिष्ठितं पापैः ।
दिग्पान्तरिक्षभौमैरुत्पातैर्दूषितं च भं त्याज्यम् ॥ ३४ ॥

सूर्यनक्षत्राद्भुवनमितं चतुर्दश नक्षत्रं त्याज्यम् । तथा पापग्रहैराक्रान्तं तत्पूर्वं तत्परं च नक्षत्रं त्याज्यम् । तथा त्रिविधैरुत्पातैर्दूषितं च

नक्षत्र त्याज्यम् । प्रागुक्तस्यापि कस्यापि कस्यचित्पुनरुक्तिर्दृढत्वोपस्थित्यर्थम् ॥

पञ्चशलाकाचक्रमाह द्वाभ्याम्—

**तिर्यगूर्ध्वं पञ्च रेखा द्वे द्वे कोणेषु च न्यसेत् ।**
**कोणद्वितीयरेखातः कृत्तिकादीनि साभिजित् ॥ ३५ ॥**

तिर्यगूर्ध्वं प्रागायता उदगायताश्च पञ्च पञ्च रेखा लिखित्वा कोणेषु द्वेद्वे रेखे न्यसेत् । ततेशानकोणस्थद्वितीयरेखामारभ्य साभिजिद्यथा स्यात्तथा कृत्तिकादीनि भानि न्यसेत् ॥

**एतत्पञ्चशलाकाख्यं चक्रं सप्तशलाकिकम् ।**
**पूर्वमुक्तं तदुभयोर्वेधश्चिन्त्योऽत्र पूर्ववत् ॥ ३६ ॥**

इदं पञ्चशलाकं चक्रम् । सप्तशलाकं तु पूर्वं संस्कारप्रकरण उक्तं तयोरुभयोर्वेधोऽत्र विवाहे पूर्ववत् नक्षत्रोक्तरीत्या चिन्त्य । यथा—तत्तन्नक्षत्रस्थितग्रहेष्वपि तत्र न्यस्तेषु रेखादिस्थितेन ग्रहेण समानरेखाग्रस्थ नक्षत्र विध्यते । यथा—रोहिणीस्थे ग्रहेऽभिजिद्विद्धा । अभिजित्स्थितेन रोहिणी विद्धा । एवं सर्वत्र ॥ तथा चतुर्थचरणस्थे ग्रहे समानरेखास्थनक्षत्रस्य प्रथमपादो विद्धः । एवं प्रथमपादस्थेऽपि चतुर्थ पादो विद्ध । एवमेव द्वितीयस्थे तृतीयस्तृतीयस्थे द्वितीय इति । तत्र पापैर्विद्ध समस्त त्यजेत् । शुभैर्विद्ध तु पादमात्र त्यजेत् । चक्रद्वयस्य व्यवस्थामाह श्रीपति —"वधूप्रवेशने दाने वरणे पाणिपीडने । वेध पञ्चशलाकाख्यो ऽन्यत्र सप्तशलाकक ॥" इति । केचिद्विवाहेऽपि सप्तशलाकावेधो वर्ज्य इत्याहु ॥

**नैस्व्यं मृत्युश्चामजस्रं दौर्भाग्यं च सपत्नता ।**
**प्रव्रज्येन्दौ युतेऽर्काद्यैः कैश्चिज्ज्ञेज्ययुते शुभम् ॥ ३७ ॥**

---

१ ऊर्ध्वं तिर्यगेखिका सप्त सप्तेत्युत्तमम् ।

इन्दौ सूर्यादिभिर्युक्ते क्रमेणैतत्फलम्। यथा—सूर्ययुक्ते चन्द्रे नैस्व्यं दारिद्र्यम्। भौमयुक्ते मृत्युः। बुधयुक्तेऽप्रजत्वं सन्तानराहित्यम्। गुरुयुक्ते दौर्भाग्यम्। भृगुयुक्ते सपत्नता मत्सरः। शनियुक्ते प्रव्रज्या वैराग्यम्। कैश्चिच्छ्रीपत्यादिभिर्बुधगुरुयोगे सौख्यमुक्तम्॥

द्व्याद्यैः खलैर्युते चन्द्रे मृत्युः सद्भिः प्रवासिता।
चन्द्रे स्वमित्रस्वेऽत्रोच्चे न दोषो ग्रहदोषजः॥ ३८॥

द्व्याद्यैः खलैः पापद्वयेन पापत्रयेण वा युक्ते चन्द्रे मृत्युः। द्व्याद्यैः सद्भिः युक्ते प्रवासः फलम्। अथास्य परिहारमाह—चन्द्र इति। स्वगृहे मित्रगृहे उच्चे वा चन्द्रे सति ग्रहयोगजन्यो दोषो नास्ति॥

कर्तरी स्याद्‌वनास्वस्थौ खलौ चेद्वक्रिमार्गिणौ।
परिणीतौ तदाक्रान्तलग्ने भग्नमनोरथौ॥ ३९॥

द्वितीयस्थाने पापो वक्रगः द्वादशे पापो मार्गगः। एवं चेत्कर्तरीदोषः। तदाक्रान्ते लग्ने तन्मध्यगते लग्ने परिणीतौ दम्पती शोकदारिद्र्यादिना भग्नाभिलाषौ स्तः॥

अथ महापातसम्भवमाह—

अजसिंहे झषकन्ये कुम्भतुले मृगवृषे धनुर्मिथुने।
अलिकर्के शशिभान्वोः क्रान्तेः साम्यं सजेद्विवाहादौ ४०

मेषाद्युक्तद्वयेषु पाठक्रमेण व्युत्क्रमेण वा स्थितयोः शशिसूर्ययोः क्रान्तेः साम्यं महापाताख्यं सम्भवति। तदानयनं सूर्यसिद्धान्ते द्रष्टव्यम्। तद्विवाहादौ शुभे त्यजेत्॥

वैधृतिगण्डहर्षणशूलव्यतिपातसाध्यानाम्।
यदुडु स्पृशति विरामं तदशेषं पातदूषितं त्याज्यम्॥४१॥

वैधृत्यायुक्तयोगानां विरामं अन्तं यदुडु स्पृशति तदशेषं पातेन चण्डायुधाख्येन दूषितमतस्त्याज्यम्। उक्तयोगान्ते स्थितं नक्षत्रं त्यजेदित्यर्थः॥

**विष्कम्भादिनिषिद्धेष्वपि चेद्योगेषु दोर्ग्रहस्तत्र ।**

**रविभाद्विषमं चान्द्रं खार्जूरं तत्सहाभिजित्त्याज्यम् ॥४२॥**

विष्कम्भगण्डातिगण्डशूलादिदुष्टयोगेषु पूर्वोक्तदुष्टघटिकास्त्यक्त्वा विवाहोऽपेक्षितश्चेत्तत्र सूर्यनक्षत्राच्चन्द्रनक्षत्रमभिजित्सहितं विषमं चेत्खार्जूरसंज्ञं तत्त्याज्यम् ॥

लत्तादोषमाह—

**लत्तयन्ति शनिसूर्यकुजेज्या वस्विनत्रिषड्डूनि पुरस्तात् ।**

**पृष्ठतोऽगुसितपूर्णशशिज्ञा गोशराकृतिनगममितानि ॥४३॥**

शनिः स्वाक्रान्तनक्षत्रादष्टमं नक्षत्रं पुरस्ताल्लत्तयति । एवं सूर्यो द्वादशं भौमस्तृतीयं गुरुः षष्ठम् । राहुशुक्रादयस्तु स्वाक्रान्तनक्षत्रात्पृष्ठतो लत्तयन्ति । तत्र राहुः पृष्ठतो नवमम् । शुक्रः पृष्ठतः पञ्चमम् । एवं पूर्णचन्द्रो द्वाविंशम् । बुधः सप्तमम् । राहोः सदा वक्रत्वाच्छुक्रादि वैलक्षण्येन लत्ता ज्ञातव्या । यथा—अश्विन्यां स्थितो राहुराश्लेषां लत्तयतीत्येवं लत्तितं नक्षत्रं त्याज्यम् ॥

**उपग्रहोऽर्कभात्पञ्च नागदिङ्मनुसप्तमम् ।**

**अतिधृत्यस्तिथिर्धृत्यः प्रकृतेः पञ्च भानि च ॥ ४४ ॥**

अर्कभात्सूर्याक्रान्तनक्षत्राच्चन्द्रनक्षत्रं पञ्चममष्टमं दशमं चतुर्दशं सप्तमं एकोनविंशं पञ्चदशमष्टादशं एकविंशं द्वाविंशं त्रयोविंशं चतुर्विंशं पञ्चविंशं चोपग्रहोनाम दोषः ॥

देशभेदेन परिहारमाह—

**लत्तां सौराष्ट्रशाल्वेषूपग्रहं कुरुवाह्लिके ।**

**कलिङ्गवङ्गयोः पातं वेधं सर्वत्र वर्जयेत् ॥ ४५ ॥**

पातं वैधृतिगण्डेत्यादिनोक्तम् । वेधं पञ्चशलाकजम् । शेषं स्पष्टम् ॥

अथ लग्नादिस्थानवशादिष्टग्रहानाह—

त्रिषष्ठाष्टस्वर्कः सहजधनगोऽब्जः क्षितिसुत-
स्त्रिषष्ठस्थो ज्ञेज्यौ व्ययनिधनवर्ज्यौ भृगुसुतः ।
द्वितीयाब्धीष्वङ्काभ्रतनुषु रिपुत्र्यष्टसु शनि-
स्तमः केतुश्चाये भवति सुखहेतुश्च सकलः ॥ ४६ ॥

अर्कस्त्रिषष्ठाष्टमेषु शुभः । अब्जश्चन्द्रस्तृतीयद्वितीयगतः शुभः । कैश्चिच्चतुर्थेऽपि शुभ उक्तः । भौमस्तृतीये षष्ठे स्थितः शुभः । बुधगुरू द्वादशेऽष्टमे च वर्ज्यौ । अर्थाल्लग्नादिषष्ठपर्यन्तेषु नवमे दशमे च शुभौ शुक्रो द्विचतुःपञ्चनवमदशमेषु लग्ने च शुभः । शनिराहुकेतवः षट्तृतीयाष्टमे शुभाः । आये दशमे सर्वोऽपि ग्रहः सुखहेतुर्भवति ॥

अथ लग्नभङ्गयोगमाह—

रविर्लग्ने चन्द्रस्तनुरिपुमृतिस्थः क्षितिसुतो-
ऽष्टलग्नाभ्रे ज्ञेज्यौ निधन उशनाख्यष्टरिपुषु ।
शनिर्लग्नान्त्यस्थस्तनुपतिरथार्यष्टमगृहे
विवाहे स्युः सर्वे मदनसदने नैव शुभदाः ॥४७॥

लग्ने रविः । लग्ने षष्ठेऽष्टमे च चन्द्रः । अष्टमे लग्ने दशमे च भौमः । अष्टमे बुधगुरू । तृतीयाष्टमषष्ठेषु शुक्रः । लग्ने द्वादशे च शनिः । षष्ठेऽष्टमे च लग्नाधिपः । सप्तमे सर्वे सूर्यादयः । एते विवाहे शुभदा नैव स्युः ॥

इष्टैः पञ्चभिरिष्टं स्यात्तैरनिष्टमनिष्टगैः ।
ततोऽधिकैः स्यादधिकं न्यूनैर्न्यूनं फलं ग्रहैः ॥ ४८ ॥

'त्रिषष्ठाष्टस्वर्कः' इत्यादिनोक्तैः पञ्चभिरिष्टैर्ग्रहैर्विवाहे इष्टं स्यात् । विवाहः कर्तव्य इत्यर्थः । अनिष्टस्थानस्थितैस्तैः । पञ्चभिरनिष्टम् । विवाहो न स्यादित्यर्थः । ततः पञ्चभ्योऽधिकैः फलमधिकस्याधिकं स्यात् ।

न्यूनैस्तु न्यूनं फलम् । 'रविर्लग्ने' इत्यादिनोक्ते लग्नभङ्गकरे त्वेकस्मिन्नपि ग्रहे विवाहो नेष्ट इत्यवधेयम् ॥

अष्टमलग्नदोषं सापवादमाह—

**जन्मराशेर्जन्मलग्नाद्राशिर्नेष्टोऽष्टमस्तनौ ।**
**पत्यैके पतिसख्ये वा नैष दोषः करग्रहे ॥ ४९ ॥**

दम्पत्योर्जन्मराशेर्जन्मलग्नाद्वाऽष्टमो राशिस्तनौ लग्ने नेष्टः । तद्भिन्नं लग्नं नेष्टमित्यर्थः । जन्मराशिजन्मलग्नयोर्मध्ये यस्मादष्टमं तस्य च विवाहलग्नस्य च स्वाम्यैक्ये सति स्वामिमैत्र्यां वा सत्यां एषोऽष्टमलग्नसम्बन्धी दोषो विवाहे नास्ति ॥

**जनिभतनुभ्यां व्ययभं तदंशपति वा तनौ न सौख्याय ।**
**चन्द्रे तौलिमृगस्थे चरलग्ने नो चरांशको योज्यः ॥ ५० ॥**

जन्मराशेर्जन्मलग्नाद्द्वादशो राशिस्तदंशस्तत्पतिर्वा तनौ लग्ने सौख्याय न स्यात् । अंशश्च पतिश्च अंशपती तयोः समाहारोंऽशपति । तस्य व्ययभस्यांशपति तदंशपतीति विग्रहः । तौलिमृगस्थे तुलामकरस्थे चन्द्रे सति चरलग्ने विहिते चरांशको न योज्यः ॥

अथ वर्गोत्तममाह—

**नवमांशोऽनुक्रमतश्चरस्थिरद्विस्वभावेषु ।**
**वर्गोत्तमाभिधानः स्यात्प्रथमः पञ्चमो नवमः ॥ ५१ ॥**

चरराशौ प्रथमः स्थिरराशौ पञ्चमः द्विस्वभावराशौ तु नवमो नवांशो वर्गोत्तम इत्यर्थः ॥

**अष्टमभवननवांशस्तदधिपतिर्वा तनौ भवेन्न शुभः ।**
**न शुभश्चरमनवांशो लग्ने वर्गोत्तमं विहायात्र ॥ ५२ ॥**

अष्टमभवननवांशो यदि लग्ने स्यात् अथवा अष्टमभवनस्वामी लग्ने स्यात् तदा न शुभः । लग्ने विहितोऽप्यन्त्यनवांशो वर्गोत्तमं विना न शुभः ।

जामित्रमाह—

लग्नाच्चन्द्राद्वा सप्तमश्चेच्छुभो वाप्यशुभो ग्रहः ।
जामित्रसंज्ञो दोषोऽयं विवाहे वर्जयेत्सदा ॥ ९३ ॥

विवाहलग्नाच्चन्द्राद्वा सप्तमस्थे ग्रहे जामित्रदोषस्तं विवाहे त्यजेत् ॥

अस्यापवादभूतं सूक्ष्मजामित्रमाह—

तत्रापि पञ्चपञ्चाशच्चांशस्थौ मिथो यदि ।
ग्रहेन्दू ग्रहलग्ने वा जामित्रं तत्स्मृतिमिदम् ॥ ९४ ॥

ग्रहाधिष्ठितनवांशमारभ्य पञ्चाधिकपञ्चाशन्मितनवांशस्थे चन्द्रे लग्ने वा सूक्ष्म जामित्र स्यादित्यर्थः । यथा—मेषस्य पञ्चमनवांशे भौमोऽस्ति तत्स्तुलाया· पञ्चमनवांशे लग्नं चन्द्रो वा निषिद्ध । तदा चन्द्राधिष्ठितांशाल्लग्नांशाद्वा तावन्मित एव ग्रहाधिष्ठितनवांशोऽपि भवतीति मिथ इत्युक्तम् ॥

अथेष्टग्रहाणां विशोपकानाह—

सार्धत्रयः पञ्च च सार्धमेकं द्वावत्रयो द्वावथ सार्धसार्धे ।
विशोपका विंशतिरानुकूल्यादर्कादिकानामगुवत्तु केतोः ९५

सूर्यादीनामानुकूल्यादेते क्रमेण विशोपकाः स्युः । यथा—सूर्यस्यानुकूल्ये सार्धत्रय. । चन्द्रस्य पञ्च । भौमस्य सार्धेकम् । बुधस्य द्वौ । गुरोस्त्रय· । भृगोर्द्वौ । शनेः सार्धैकम् । राहोः सार्धैकम् । एवं सहन्य विंशति· । केतोरपि राहुवज्ज्ञेयम् । कस्मात्कः कियानधिक इति ज्ञानार्थमिदम् ॥

क्रमाद्वरवधूसम्पत्पुत्रयुद्धमवेश्मनाम् ।
बलाबलाभ्यां विज्ञेये सूर्यादीनां शुभाशुभे ॥ ९६ ॥

सूर्यादीना बलाबलाभ्या भर्त्रादीना शुभाशुभे फले क्रमाद्विज्ञेये । यथा—सूर्यस्य बलाद्भर्तुः शुभं फलम् । चन्द्रबलाद्वध्वाः शुभम् । भौ

मस्य बलात्सम्पदो धनस्य । बुधबलात्पुत्रस्य । गुरुबलान्मुदो हर्षस्य । शुक्रबलाद्धर्मस्य । शनिबलाद्गृहस्य । एवमेषां निर्बलत्वात्तस्य तस्याशुभं ज्ञेयम् ॥

**विवाहेऽन्त्येशाक्र्केभ्यः षड्द्वादशनवोडुषु ।**
**वधूप्रीतिर्मिथः प्रीतिर्वरप्रीतिरनुक्रमात् ॥ ५७ ॥**

अन्त्याद्रेवतीमारभ्य षट्सु नक्षत्रेषु विवाहे वधूप्रीतिः वधूः प्रीणाति । अत्र विवाहशब्देन वधूवरसमागमो राज्ञामन्तःपुरस्थनवस्त्रीसमागमश्चो-पलक्ष्यते । आर्द्रामारभ्य द्वादशसु वधूवरयोर्मिथः प्रीतिः ज्येष्ठामारभ्य नवसु वरप्रीतिः ॥

अथोदयास्तशुद्धिमाह चतुर्भिः—

**अंशपेनेक्षितयुतौ लग्नांशौ पतिसौख्यदौ ।**
**अंशास्तपेन चांशास्तलग्नास्ते चेत् स्त्रियाः शुभौ ॥ ५८ ॥**

अंशपेन नवांशस्वामिना ईक्षितौ युतौ वा लग्नांशौ लग्नमंशो वा तौ पतिसौख्यदौ भवतः । यथा—मेषलग्ने मिथुनांशस्तत्स्वामी बुधो मकरे स्थितो लग्नमीक्षते लग्ने तिष्ठति वा । यद्वा स एव बुधस्तुलायां तिष्ठन्मि-थुनांशं पश्यति मिथुने वा तिष्ठति तदा तेनेक्षितयुतौ लग्नांशौ स्तः । एवमुदयशुद्धेः प्रकारद्वयमुक्तम् । अस्तशुद्धेरपि प्रकारावाह—अंशास्त-पेनेति । अंशान्नवमांशादस्तं सप्तमनवांशास्तदधिपो अंशास्तपः तेन अं-शास्तलग्नास्ते अंशात्सप्तमनवांशो लग्नात्सप्तमस्थानं वा ईक्षितं युतं वा वध्वाः शुभमित्यर्थः । यथा—मिथुननवांशात्सप्तमो धनुरंशस्तदधिपो गु-रुर्मेषे तिष्ठन् धनुरंशं पश्यति तत्र तिष्ठति वा । अथ वा गुरुः कर्के तिष्ठन् धनुरंशं न पश्यति किं नु लग्नात्सप्तमस्थानं तुलां पश्यति तदा वध्वाः शुभम् । तदुक्तं कश्यपेन—"स्वस्वेशेनोदयास्तांशौ वीक्षितौ वाऽथ संयुतौ । लग्नं वाऽस्तगृहं तत्तदंशेशेनेक्षितं युतम् ॥" इति ॥

अंशेश्वरोंऽशं तनुपस्तनुं वा पश्येन्मिथो वा शुभदो वरस्य ।
वध्वाः शुभायास्तपतिस्तथास्तमंशास्तमंशास्तपतिर्मिथो वा

अंशस्वामी अंशं पश्येत् लग्नस्वामी च लग्नं पश्येत् अथ वा मिथः परस्परं अंशस्वामी लग्नं पश्येल्लग्नस्वामी अंशं च पश्येत्तदा वरस्य शुभं स्यात् । एवमस्तपतिर्लग्नात्सप्तमाधीशोऽस्तं लग्नात्सप्तमभवनं पश्येत् । अंशास्तपतिर्नवांशात्सप्तमनवांशस्वामी अंशास्तं अंशात्सप्तमनवांशं पश्येत् । अथ वा मिथः । अस्तपतिरंशास्तं पश्येदंशास्तपतिरस्तं च पश्येत्तदा वध्वाः शुभाय स्यात् ॥

अंशेशमित्रं सौम्यश्चेदंशं वा लग्नमीक्षते ।
शुभो वरस्य वध्वास्तु ज्ञेयमस्तांशपादिति ॥ ६० ॥

अंशेशो नवमांशस्वामी तस्य मित्रं सौम्यः शुभग्रहश्चेत्स्यात् स चेदंश नवांशं लग्नं वेक्षते तदा वरस्य शुभो ज्ञेयः । इत्येवंप्रकारेणास्तांशपाद्वध्वाः शुभं ज्ञेयम् । लग्नसम्बन्धिनवांशात्सप्तमनवांशाधिपस्य मित्रभूतः शुभग्रहोऽस्तनवांशमस्तभवनं वा वीक्षते चेद्वध्वाः शुभमित्यर्थः ॥

इत्थं विचिन्त्योदयशुद्धिमादौ
चिन्त्यास्तशुद्धिर्बहुबुद्धिमद्भिः ।
तदन्यथात्वे तु वरस्य वध्वाः
क्रमाद्भवन्त्युत्क्रमणान्यमूनाम् ॥ ६१ ॥

इत्थमुदयशुद्धिमादौ विचिन्त्य पश्चादस्तशुद्धिर्बहुबुद्धिमद्भिश्चिन्त्या । तदन्यथात्वे तयोरुदयास्तशुद्ध्योरभावे क्रमाद्वरस्य वध्वा असूनां उत्क्रमणानि भवन्ति । श्लोकत्रयोक्तप्रकारमध्ये कथञ्चिदुदयशुद्ध्यभावे वरस्य प्राणोत्क्रमणम् । अस्तशुद्ध्यभावे वध्वाः प्राणोत्क्रमणमित्यर्थः ॥

नवमांशा धनुर्मीनकन्यामिथुनतौलिनः ।
विवाहलग्ने यस्याः स्युः सा वधूः स्यात्पतिव्रता ॥ ६२ ॥

स्पष्टम् ॥

अथ पञ्चकमाह—

**लग्नयुग्गततिथिर्नवतष्टा नागनेत्रयुगतर्ककुशिष्टा ।**
**रोगवह्निनृपदस्युमृतिभ्यो भीतये भवति दक्षिणवाणः ६३**

शुक्लप्रतिपदमारभ्य गततिथिर्लग्नयुक् वर्तमानलग्नेन युक्ता नवभिस्तष्टा अष्टसङ्ख्ये शेषे रोगाख्यो बाणः । नेत्रशेषे वह्निबाणः । चतुःसङ्ख्ये शेषे राजबाणः षट्सङ्ख्ये चौराख्यः । एकशेषे मृत्युसंज्ञकः । दक्षिणदेशे प्रसिद्धत्वाद्दक्षिणबाणोऽयं तत्तत्संज्ञया रोगादिभ्यो भीतये भवति ॥

अथ प्राचां मतेन बाणमाह—

**सङ्क्रान्तियातांशमितिस्तु पञ्चधा**
**स्थाप्याङ्करामेन्दुगजाब्धिभिर्युता ।**
**नवोद्धृता यत्र च पञ्चशेषकं**
**बाणः परोऽत्रापि रुगादिकं क्रमात् ॥ ६४ ॥**

सङ्क्रान्तेर्यातांशाना मितिः । सूर्यभुक्तांशसङ्ख्येति यावत् । सा लिप्यादिकमुपेक्ष्य पञ्चधा स्थाप्या । क्रमेण षड्भिस्त्रिभिरेकेनाष्टभिश्चतुर्भिर्युता प्रत्येकं नवभिस्तष्टा यत्र स्थाने पञ्चसङ्ख्यं शेषं स्यात्तत्र पूर्वोक्तक्रमेण तत्तत्संज्ञोऽयमग्र्यो बाणः स्यात् ॥ यत्र षड्भिर्युक्ता तत्र पञ्चसङ्ख्ये शेषे रोगबाणः । यत्र त्रिभिर्युक्ता तत्र पञ्चमिते शेषे वह्निबाण इत्यादि । अत्रापि रुक् रोगस्तदादिकं भयं क्रमात् ॥ अयं बाणः शल्यरहितोऽतः स्वल्पबलो ज्ञेयः ॥

अथ सशल्यबाणमाह—

**विशेषस्तत्र शेषैक्यं नवतष्टं भवेद्यदि ।**
**पञ्चशेषं सशल्योऽयं बाणस्त्याज्यः प्रयत्नतः ॥ ६५ ॥**

विशेषस्तु तत्र यानि शेषाण्यागतानि तेषामैक्यं नवभिस्तष्टं पञ्च-

सङ्ख्यं शेषं यत्र तत्तथा यदि भवेत्तदा सशल्यः शल्येन लोहाग्रेण सहितो बाणः स्यात् । अयं प्रबलत्वात्प्रयत्नतस्त्याज्यः ॥

अथ कार्यभेदेन वारभेदेन समयभेदेन च बाणपरिहारमाह द्वाभ्याम्—

**मौञ्जीगृहाच्छादनराजसेवायात्राविवाहे क्रमतश्च कैश्चित् ।**
**रोगो रवौ ज्ञे मृतिरग्निचोरौ भौमे शनौ राजशरः परैश्च ६६**

मौञ्ज्यां रोगाख्यो बाणः गृहाच्छादने वह्निसंज्ञः राजसेवायां नृपाख्यः यात्रायां चोराख्यः विवाहे मृत्युसंज्ञस्त्याज्य इति कैश्चित् ॥ परैस्तु रविवारे रोगस्त्याज्यः बुधे मृत्युसंज्ञः भौमे वह्निचोरौ शनौ राजबाण इत्युक्तम् ॥

**रात्रौ चोररुजौ राजा दिने मृत्युस्तु सन्ध्ययोः ।**
**सदा वह्निशरस्त्याज्यः प्रोक्तः कैश्चिन्मनीषिभिः ॥ ६७ ॥**

चोरो रोगश्च रात्रौ त्याज्यौ । दिने राजाख्यः सन्ध्याद्वये मृत्युसंज्ञः । वह्निबाणस्तु सदा त्याज्यः । कैश्चित्सुधीभिः प्रोक्तः ॥

अथ दशयोगदोषमाह—

**रवीन्दुभयुतिर्हृतोडुभिरिहाभ्रभूवेदषड्-**
**दशेशतिथयो धृतिस्त्वतिधृतिः कृतिः शेषकम् ।**
**भवेद्यदि मरुद्घनाग्निनृपचोरमृत्युरुग्वज्र-**
**ऽशनिक्षतकलिक्षतीति दशयोगदोषः क्रमात्॥६८॥**

सूर्यनक्षत्रचन्द्रनक्षत्रयोर्युतिः कर्तव्या । सा सप्तविंशत्या भक्ता यदिह शेषकं तदभ्रभूवेदादिमितं चेद्भवेत्तदा मरुद्घनादिसंज्ञो दशयोगदोषः स्यात् । यथा अभ्रं शून्यं तस्मिञ्शेषे मरुत् वाताख्यो योगः । एकशेषे घनो मेघाख्यो योगः चतुःशेषेऽग्निः। षट्सु शेषे राजा। दशसु चोरः। एकादशसु मृत्युः । पञ्चदशसु रोगः । अष्टादशसु वज्रक्षतम् । एकोनविंशतौ कलहः । विंशतौ क्षतिर्धनक्षयः । अत्र क्षत्यन्तानां द्वन्द्वसमाहारो । वातयोगे वातादोष एवं सर्वत्रोह्यम् ॥

अथाष्टमभौमादीनामपवादमाह—

**कुजोऽष्टमः सितः षष्ठश्चन्द्रोऽष्टान्त्यारिगोऽपि चेत् ।**
**अस्तारिनीचे न त्याज्यस्तद्वत्कर्तरिकारकौ ॥ ६९ ॥**

लग्नादष्टमो भौमस्तथा षष्ठः शुक्रस्तथाष्टमद्वादशषष्ठगश्चन्द्रोऽपि अस्तारिनीचे अस्तगतः शत्रुक्षेत्रे गतो नीचगृहगतो वा चेत्तदा न त्याज्यः कर्तरिकारकौ पापग्रहौ च तद्वदस्तारिनीचस्थितौ नैव त्याज्यौ ॥

अथ वर्षमासादनेकदोषाणामपवादमाह—

**गुरुशुक्रविदामेको यदि केन्द्रत्रिकोणगः ।**
**शशी वर्गोत्तमे पूषोपान्त्ये वाशेषदोषनुत् ॥ ७० ॥**

वित् बुधः पूषा सूर्य उपान्त्ये एकादशे अशेषदोषान्नुदति परिहरतीति तथा । शेषं स्पष्टम् ॥ मुहूर्तचिन्तामणौ—"अब्दायनर्तुतिथिमासभपक्षदग्धतिथ्यङ्ककाणबधिराङ्गमुखाश्च दोषाः । नश्यन्ति विद्गुरुसितेष्विह केन्द्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषाः॥" इति ॥

**विवाहलग्नाष्टमराशिनाथः शुभेक्षितः केन्द्रगतो यदि स्यात् ।**
**अपाकरोत्यष्टमलग्नदोषं प्रतापलङ्केश इव त्रिदोषम् ॥७१॥**

विवाहलग्नादष्टमराशेः स्वामी यदि शुभग्रहेणेक्षितः केन्द्रगतः स्यात्तदा जन्मराशेर्जन्मलग्नाद्वाष्टमे लग्ने सति यो दोषस्तमपाकरोति । यथा प्रतापलङ्केशो नाम वैद्यके प्रसिद्धो रसविशेषस्त्रिदोषं कफवातपित्तविकारं हन्ति ॥

**वर्गोत्तमे तनुश्चन्द्रो लाभे वा लाभकेन्द्रयोः ।**
**लग्नपांशपयोरेकः सोऽपि दोषापवादकः ॥ ७२ ॥**

वर्गोत्तमे स्वनवांशे तनुर्लग्नं अथवा लाभे एकादशे चन्द्रः यद्वा लाभे केन्द्रे वा लग्नपतिर्नवांशपतिर्वा स्थितः सोऽपि दोषाणां दुर्मुहूर्तकुनवांशादीनामपवादकः परिहारकः ॥

खार्जूरपातजामित्रलत्तोपग्रहकर्तरि ।
उदयास्ते च न त्याज्ये चन्द्रार्कौ बलिनौ यदि ॥ ७३ ॥

यदि चन्द्रार्कौ बलिनौ स्वोच्चमित्रादिस्थानस्थितत्वेन सबलौ यदि । तदा खार्जूरादयो दोषा न त्याज्याः । उदयो लग्नं अस्तं सप्तमस्थानं तेच न त्याज्ये । स्वामिदृष्टियाहित्यादिना तत्र दोषः स च । न त्याज्य इत्यर्थः ॥

अथ लत्तादिदोषाणामपवादमाह—

लत्तितांघ्रिं त्यजेत्तुल्यं लत्तपद्ग्रहभांघ्रिणा ।
पातोपग्रहखार्जूरभांघ्रिं च रविभांघ्रिणा ॥ ७४ ॥

लत्तयन् लत्ताकारी ग्रहो यत्संख्ये नक्षत्रचरणे तिष्ठति तत्समसंख्याक लत्तितनक्षत्रचरणं त्यजेदित्यर्थः । पातश्चण्डायुधाद्यः प्रागुक्तः। उपग्रहखार्जूरौ च प्रागुक्तौ । तत्र रविर्यत्संख्यचरणे तिष्ठति तत्समसंख्यमेव तेषां नक्षत्रचरणं त्यजेत् ॥

अथ गोधूलिकालमाह—

पिण्डीभूतेऽर्धास्ते पूर्णास्तेऽर्के क्रमेण गोधूलिः ।
शस्ताखिलेषु मार्गाच्चैत्रान्नभसश्चतुर्षु मासेषु ॥ ७५ ॥

मार्गशीर्षाच्चतुर्षु मासेषु अर्के सूर्ये पिण्डीभूते पिण्डसदृशे सामसन्ध्यायां नीहारावृतत्वेन गतप्रभ इत्यर्थः । तस्मिन्समये गोधूलिर्ज्ञेया । तथा चैत्राच्चतुर्षु मासेषु अर्धास्ते अर्धबिम्बस्य दृश्यत्वे गोधूलिः । नभसश्श्रावणाच्चतुर्षु पूर्णमस्तमदर्शनं यस्य तादृशेऽर्के सति गोधूलिः कालः । इय गोधूलिर्विवाहादिसकलशुभकार्येषु शस्ता । अस्याः कालपरिमाणं तु घटिकादलमिष्टमाहुरिति केशवार्केणोक्तम् ॥

लग्नाष्टषष्ठगं चन्द्रं कुजं लग्नमदाष्टम् ।
क्रान्तिमाम्यं च कुलिकं गोधूल्यां यत्नतस्त्यजेत् ॥ ७६ ॥

लग्नेऽष्टमे षष्ठे च स्थितं चन्द्रं तथा लग्ने सप्तमेऽष्टमे च भौमं क्रान्तिसाम्यं महापातं कुलिकं च गोधूल्यां यत्नात्त्यजेत् ॥

**पञ्चाङ्गशुद्ध्यादिविचारणा स्या-**
**न्नास्तीति वादः पुनरर्थवादः ।**
**आवश्यके कर्मणि लग्नशुद्धिं**
**विनापि गोधूलिरुदाहियेत ॥ ७७ ॥**

गोधूल्यां पञ्चाङ्गशुद्धिलग्नशुद्ध्यादिविचारणा स्यात्कर्तव्येत्यर्थः । पञ्चाङ्गशुद्ध्यादिर्नास्तीति रामदेवज्ञादीनां वादस्त्वर्थवादः । गोधूल्याः प्राशस्त्यकथनमात्रमित्यर्थः । तथाप्यावश्यके कर्मणि लग्नशुद्धिं विनापि गोधूलिरुदाहियेत वक्तव्या ॥

अथ गोधूल्यधिकारिण आह—

**सदा प्रशस्तः शूद्राणां मध्यमः क्षत्रवैश्ययोः ।**
**गोधूल्यां घटिकालाभे विप्राणामपि दोर्ग्रहः ॥ ७८ ॥**

शूद्राणां गोधूल्या दोर्ग्रहो विवाहः सदा प्रशस्तः । घटिकालाभे इष्टलग्नघटिकाया अलाभे लग्नान्तरशुद्ध्यभाव इत्यर्थः । शेषं स्पष्टम् ॥

**उक्तेऽनुक्तेऽपि नक्षत्रे वारे योगे तिथौ तथा ।**
**सङ्कीर्णानां विवाहः स्यात्सुतायुर्धनवृद्धये ॥ ७९ ॥**

सर्वेषु नक्षत्रेषु सर्वेषु वारेषु सर्वेषु योगेषु सर्वासु तिथिषु च अनुलोमजादीनां विवाहः सुतायुर्धनवृद्धये स्यात् ॥

**गान्धर्वपाणिग्रहणे त्रिपट्टीचक्रेऽर्कभाद्भानि लिखेत्क्रमेण ।**
**वेदाक्षिरामेन्दुकुवेदतर्करामेन्दुरामैरशुभं शुभं स्यात् ॥८०॥**

गान्धर्वविवाहे त्रिपट्टीनामके चक्रे क्रमेण सूर्यक्रान्तनक्षत्रात् चन्द्रनक्षत्राणि चत्वार्यशुभानि ततो द्वे शुभे त्रीण्यशुभानि तत एकं शुभम् तत एकमशुभमेवमुत्तरत्र ज्ञेयम् । त्रयाणां पट्टानां ब्रह्मपट्टविष्णुपट्टरुद्रपट्टानां समाहारस्त्रिपट्टी । एकस्मिन्नपि पट्टे यदशुभं तदत्राशुभमुक्तम् ।

पट्टत्रयेऽपि यच्छुभं तदत्र शुभमुक्तमिति पट्टत्रयं पृथगनुक्त्वा तत्सङ्ग्रहः कृत इति ज्ञेयम् ॥

दलनकण्डनमुहूर्तमाह—

**दलनं कण्डनं वेदीं हरिद्रादिकमाचरेत् ।**
**विवाहोक्तोडुभिर्नो प्राक्त्रिषण्णवमिते दिने ॥ ८१ ॥**

आदिना मण्डपादिकं गृह्यते । विवाहोक्तैरुडुभिर्नक्षत्रैराचरेत् । इद विवाहात्पूर्वं तृतीये षष्ठे नवमे वा दिने नाचरेत् ॥

अथ मण्डपस्तम्भनिवेशने विशेषमाह—

**स्तम्भः स्थाप्यः क्रमादर्के वृषराशेस्त्रिभे त्रिभे ।**
**आग्नेय्यां च तथैशान्यां वायव्यां निर्ऋतेर्दिशि ॥ ८२ ॥**

वृषमिथुनकर्कस्थेऽर्के आग्नेय्यां स्तम्भः स्थाप्यः सिंहकन्यातुलास्थितेऽर्के ईशान्यां वृश्चिकधनुर्मकरस्थे वायव्यां कुम्भमीनस्थे नैर्ऋत्यां स्तम्भः स्थाप्यः ॥

वेदीलक्षणमाह—

**वेदीं कुर्यात्स्वगेहस्य वामे मण्डपमण्डिताम् ।**
**हस्तोच्छ्रितां चतुर्हस्तां चतुःस्तम्भविभूषिताम् ॥ ८३ ॥**

हस्तोच्छ्रितां हस्तमात्रोच्चां दैर्घ्ये विस्तारे च चतुर्हस्तामत एव चतुरस्रां चतुर्षु कोणेषु चतुर्भिः स्तम्भैर्विभूषितामुपरिमण्डपेन मण्डितां वेदीं वधूवरोपवेशनार्थं स्थलविशेषं स्वगृहस्य वामभागे कुर्यात् ॥

अथ प्रागुक्ताखिलदोषेभ्य एकविंशतिमहादोषानवश्यवर्जनार्थमुद्धरति त्रिभिः—

**पञ्चाङ्गशुद्धिराहित्यमशुद्धिरुदयास्तयोः ।**
**सङ्क्रान्तिः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः ॥ ८४ ॥**

तिथिवारनक्षत्रयोगकरणानि पञ्चाङ्गानि प्रसिद्धानि तच्छुद्धिराहित्य विहिततिथ्यादिराहित्यमित्यर्थः । उदयास्तयोरशुद्धिः 'अंशपैर्नेक्षितयुतौ'

इत्यादिनोक्ताया उदयास्ताशुद्धे राहित्यम् । सङ्क्रातिः सूर्यसङ्क्रमकालः । पापषड्वर्गः गृहहोरादि षड्वर्गमध्ये पापवर्गाधिक्यम् । भृगुर्लग्नात्षष्ठः । भौमो लग्नादष्टमः ॥

**गण्डान्तं कर्तरी रिःफषडष्टेन्दुश्च सग्रहः ।**
**अष्टमाङ्गं विषघटी दुर्मुहूर्तश्च वारजः ॥ ८५ ॥**

गण्डान्तं तिथिनक्षत्रलग्नानां सन्धिविशेषः । कर्तरी द्विर्द्वादशस्थवक्रमार्गगपापग्रहौ । रिःफषडष्टेन्दुः लग्नाद्व्यये षष्ठेऽष्टमे वा चन्द्रः । सग्रहः सूर्यादिग्रहयुक्तश्चन्द्रः । अष्टमाङ्गं जन्मराशेर्जन्मलग्नाद्वाष्टमं लग्नम् । विषघट्यादिकं त्याज्यप्रकरणे उक्तम् । वारजः कुलिकार्धयामादिः ॥

**खार्जूरिकं ग्रहणभोत्पातभं क्रूरवेधितम् ।**
**क्रूरयुक्तं दुर्नवांशो महापातश्च वैधृतिः ॥ ८६ ॥**

खार्जूरिकं 'विष्कम्भादिनिषिद्धेषु' इत्यादिनोक्तम् । ग्रहणभं ग्रहणनक्षत्रम् । उत्पातभं भूकम्पाद्युत्पातसम्बन्धि नक्षत्रम् । क्रूरवेधितं पञ्चशलाकाचक्रे विद्धम् । क्रूरयुक्तं पापग्रहाधिष्ठितं नक्षत्रम् । दुर्नवांशो दुष्टनवांशः । महापातः क्रान्तिसाम्यं व्यतीपातश्च । वैधृतिः प्रसिद्धः ॥

**इत्येकविंशतिस्त्याज्या महादोषा मनीषिभिः ।**
**सर्वदा सर्वकार्येषु विवाहे तु विशेषतः ॥ ८७ ॥**

एवमेकविंशतिर्महादोषाः सर्वदा सर्वेषु शुभकार्येषु मनीषिभिस्त्याज्याः । विवाहे त्वेते विशेषेण त्याज्या इत्यर्थः ॥

**मुण्डनं मण्डनाच्चौलं व्रतात्कन्याविनिर्गमः ।**
**वधूप्रवेशात्षण्मासं न स्यात्त्रिपुरुषान्तरे ॥ ८८ ॥**

*त्रिपुरुषस्य मध्ये पुत्रस्य कन्याया वा मण्डनाद्विवाहात् मुण्डनं* चौलोपनयनादि षण्मासमध्ये न स्यात् । शार्ङ्गीये—'व्रतं समावर्तनकं सचौलं केशान्तमेतानि वदन्ति तज्ज्ञाः । क्षौरं पुरस्कृत्य भवन्ति यस्माच्चत्वारि तस्मादिह मुण्डनानि ॥' इति । तथा, व्रताद्व्रतबन्धात् प-

ण्मासं त्रिपुरुषमध्ये चौलं न स्यात् । तथा वधूप्रवेशात्कन्याविनिर्गमः षण्मासं त्रिपुरुषान्तरे न स्यात् ॥ "पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः" । इति शार्ङ्गीये ॥

**कश्चित्त्रिपुरुषान्तश्चेन्म्रियते निश्चयोत्तरम् ।**
**मासादूर्ध्वं विवाहः स्याच्छान्त्यार्वागपि केचन ॥ ८९ ॥**

निश्चयोत्तरं वाग्दानानन्तरं कन्याया वरस्य वा त्रिपुरुषान्तः पुरुषत्रयमध्ये कश्चित्सपिण्डो म्रियते चेत्तदा मरणदिनमारभ्य त्रिंशद्दिनं प्रतिकूलम् । तत ऊर्ध्वं विनायकशान्त्या विवाहः स्यात् । केचन आशौचनिर्गमे मासादर्वागपि शान्त्या विवाहमिच्छन्ति । पित्रादिप्रतिकूले विशेषः—"पितुराशौचमब्दं स्यात्तदर्धं मातुरेव च । मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥" इति ॥

**सोदराणां न षण्मासं मङ्गलं न शुभे स्वधा ।**
**षण्मासाभ्यन्तरेऽपि स्यादब्दभेदो भवेद्यदि ॥ ९० ॥**

सोदराणामेकोदरप्रसूतानां मङ्गलं व्रतबन्धादिसमानसंस्कारः षण्मासं न स्यात् । तथा शुभे मङ्गलमध्ये स्वधा श्राद्धकर्म न कार्यम् ॥

**नैष दोषो यमलयोर्यतस्तावेकनालकौ ।**
**नैव सोदरयोर्देये भ्रात्रोः सोदरकन्यके ॥ ९१ ॥**

एष सोदराणा समानसंस्कारनिषेधलक्षणो दोषो यमलयोर्नास्ति । तत्र हेतुर्यत इति । एकोदरयोर्भ्रात्रोरेकोदरकन्ये च न देये कदापि ॥

अथ वधूप्रवेशमुहूर्तमाह द्वाभ्याम्—

**वधूप्रवेशः पितृमैत्रमूलक्षिप्रश्रुतिस्वातिवसुध्रुवेषु ।**
**आषोडशाहं नवपञ्चमसप्तमेऽह्नि हित्वा रविभौमरिक्ताः॥९२**

मघाद्युक्तषोडशनक्षत्रेषु आषोडशाहं विवाहदिनमारभ्य षोडशदिनमध्ये नवमे पञ्चमे सप्तमे दिने तथा समेऽह्नि द्वितीयचतुर्थषष्ठाष्टमादिसमदिने रविभौमवाररिक्तातिथीर्वर्जयित्वा वधूप्रवेशः स्यात् ॥

**ततः परस्ताद्विषमे वर्षे मासे दिने भवेत् ।**
**विवाहात्पञ्चवर्षान्ते विचारोऽग्रे यदृच्छया ॥ ९३ ॥**

ततः परस्तात्षोडशदिनानन्तरं विवाहात्पञ्चवर्षान्ते पञ्चवर्षमध्ये विषमे वर्षे विषममासे विषमदिने च विहितनक्षत्रादौ वधूप्रवेशो भवेत् । अग्रे पञ्चवर्षानन्तरं यदृच्छया स्वच्छन्दतया विचारः विषमवर्षादिनियमो नास्तीत्यर्थः । किन्तु तिथिनक्षत्रादिनियमोऽस्ति ॥

अथ प्रथमवर्षे ज्येष्ठमासादौ विशेषमाह द्वाभ्याम्—

**पत्युर्ज्येष्ठं ज्येष्ठे श्वशुरं पौषे शुचौ श्वश्रूम् ।**
**पतिमधिके क्षयमासे हन्त्यात्मानं गृहे स्थिता पत्युः ॥९४॥**

ज्येष्ठमासे पत्युर्गृहे स्थिता वधूः पत्युर्ज्येष्ठभ्रातरं हन्ति । तथा पौषे भर्तुर्गृहे स्थिता श्वशुरं हन्ति । शुचावाषाढे तु श्वश्रूं पत्युर्मातरम् । अधिके मासे पतिम् । क्षयमासे तु आत्मानं निजशरीरं हन्ति ॥

**हन्ति नवोढा पितरं पितृसदने संस्थिता चैत्रे ।**
**फलमेतत्प्रथमेऽब्दे दोषो नैव द्वितीयादौ ॥ ९५ ॥**

नवोढा वधूः चैत्रमासे पितृगृहे स्थिता पितरं हन्ति । एतत्पत्युर्ज्येष्ठ इत्यादिनोक्तं फलं प्रथमेऽब्दे प्रथमवर्षसंबन्धिज्येष्ठमासादौ जानीयात् । द्वितीयवर्षादौ तु नैव दोषः ॥

अथ द्विरागमनमुहूर्तमाह—

**स्याद्विरागमनमोजहायने मूलमैत्रलघुचश्चलध्रुवैः ।**
**मेषवृश्चिकघटस्थिते रवौ गोनृयुग्झषतुलाङ्गनातनौ ॥ ९६ ॥**

ओजहायने प्रथमतृतीयादिविषमवर्षे मूलमृदुक्षिप्रचरध्रुवनक्षत्रैः रवौ मेषवृश्चिककुम्भस्थिते सति वृषमिथुनमीनतुलाकन्याख्ये लग्ने द्विरागमनं स्यात् । वधूप्रवेशानन्तरं परावृत्य पितृगृहं प्राप्ताया वध्वाः पुनर्भर्तृगृहप्रवेशो द्विरागमनशब्दवाच्यः ॥

**गोचरे रविबलं वरस्य चेद्योषितः सुरगुरोर्बलं यदि ।**
**संमुखो न न च दक्षिणो भृगुः स्यात्तदोभयमुदे द्विरागमः॥९७**

गोचरप्रकरणोक्तरीत्या वरस्य रविबलं स्यात् चेत् । तथा कन्यकायाः सुरगुरोर्बलं यदि स्यात् । तथा भृगुः शुक्रो गन्तव्यदिगभिमुखो न स्यात् नापि दक्षिणो गच्छन्त्या वध्वा दक्षिणभागे स्थितस्तदा तद्विरागमनमुभयप्रीत्यै स्यात् ॥

अथ प्रतिशुक्रापवादमाह—

**दुर्भिक्षदेशव्यसनादिभीतिविवाहतीर्थामरदर्शनेषु ।**
**नवोढवध्वा अथवा युवत्या न चैकपुर्यां प्रतिशुक्रदोषः॥९८॥**

दुर्भिक्षदेशोपद्रवादिभये विवाहोद्देशेन यात्रायां तीर्थयात्रायां देवदर्शने च नवोढवध्वा नूतनपरिणीताया वध्वाः प्रवेशे च युवत्यास्तरुण्याः कुचपुष्पोत्पत्त्यनन्तरमिति यावत् । तथैकपुर्यां च प्रवेशे प्रतिशुक्रदोषो नास्ति ॥

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।**
**विवाहोक्तमुहूर्तानां रघुनाथो निरूपणम् ॥ ९९ ॥**

इति श्रीचित्तपावनजातीयशाण्डिल्यकुलमण्डनज्योतिर्वित्सरसात्मजरघुनाथकविकण्ठीरवविरचितायां मुहूर्तमालायां विवाहप्रकरणम् ॥

स्पष्टम् ॥

इति सुखठाणकरोपाह्वभट्टरामचन्द्रसुतश्रीमन्महेश्वरभट्टविरचितायां मुहूर्तमालापाठिकायां सौंदर्यबोधिन्यां विवाहप्रकरणं सप्तमम् ॥

---

## यात्राप्रकरणम् ८

अथ यात्राप्रकरणं व्याख्यायते । तत्र किंचित्कार्यमुद्दिश्य देशान्तरगमनं यात्रा । सा द्विविधा । तत्र परराष्ट्रे विजयार्थं नृपयात्रा समरविजया एका । तद्भिन्ना निखिलयात्रासामान्याख्या अपरा । तत्र विहित-

तिथिवासरादावारब्धाभिमतफलदा भवति सामान्या। समरविजययात्रायां तु जन्मलग्नप्रश्नलग्नादिभिर्भाविशुभाशुभफलज्ञानमावश्यकमतस्तज्ज्ञात्वैव यात्रासमयं कथयेदित्याह—

**यात्रायां जनिलग्नाच्छुभमशुभं प्रश्नलग्नाद्वा।**
**विज्ञाय वा निमित्तैर्यात्रासमयं जयाजयौ च दिशेत्॥१॥**

जनिलग्नाज्जन्मकालसम्बन्धिलग्नवशात् प्रश्नलग्नाद्वा शकुनादिनिमित्तैर्वा भाविशुभमशुभं च विज्ञाय नृपाणां जयाजयौ यात्रासमयं च दिशेत्॥

जन्मकालाच्छुभाशुभज्ञानं जातकशास्त्रे द्रष्टव्यं तदज्ञाने तु प्रश्नलग्नवशाच्छुभाशुभज्ञानमाह पद्भिः—

**जन्मलग्नं जन्मराशिस्तत्पतिः प्रश्नलग्नगः।**
**ततस्त्र्यायारिमध्यं वा प्रश्नलग्नं तदा जयः॥ २॥**

जन्मसम्बन्धिलग्नं जन्मराशिर्वा यदि प्रश्नलग्नगः प्रश्नलग्ने विद्येत। जन्मलग्नाद्यभिन्नं प्रश्नलग्नमिति यावत्। तदा प्रष्टुर्जयः स्यात्। अथ वा तत्पतिर्जन्मलग्नस्वामी जन्मराशिस्वामी वा प्रश्नलग्नगतः स्यात् तदापि जयः स्यात्। यद्वा ततस्तस्माज्जन्मलग्नाज्जन्मराशेर्वा यत्तृतीयमेकादशं षष्ठं दशमं वा स्थानं तत्प्रश्नलग्नं यदि स्यात्तदापि जय एव॥

**रिपुजनुस्तनुभे अभि तत्पती**
**उपचयश्च ततो हिबुके द्युने।**
**तनुगतो जयकृच्छिरसोदितः**
**प्रवसतामथ वा शुभवर्गकः॥ ३॥**

यं, चेत्युभिन्दति, स्स्र रिपोर्जनुस्तनुभे जन्मलग्नं जन्मराशिर्वा ततः प्रश्नलग्नाद्धिबुके चतुर्थे द्युने सप्तमे वा स्यात् तदा प्रवसतां परदेशं गच्छतां राज्ञां जयः स्यात्। अथ वा तत्पती तयोः शत्रुसम्बन्धिजन्मलग्नजन्मराश्योः पती स्वामिनौ प्रश्नलग्नाद्धिबुके द्युने वा स्यातां तदापि

**वारशूलः सौरिसोमौ प्राच्यामीज्यस्तु दक्षिणे ।**
**रविशुक्रौ प्रतीच्यां स्यादुदीच्यां बुधमङ्गलौ ॥ ११ ॥**

शनिवारसोमवारौ प्राच्यां दिशि वारशूलः । दक्षिणे गुरुवारः । प्रतीच्यां रविशुक्रौ । उत्तरस्यां बुधभौमौ । तत्तद्वारे तत्तद्दिशि न गच्छेत् ॥

**नक्षत्रशूलः प्राग्ज्येष्ठा दक्षिणस्यामजैकपात् ।**
**पश्चिमायां ब्राह्ममुदगार्यम्णं तत्र तं त्यजेत् ॥ १२ ॥**

प्राक् पूर्वस्यां ज्येष्ठानक्षत्रं नक्षत्रशूलः । एवं दक्षिणस्यां पूर्वभाद्रपदा । प्रतीच्यां रोहिणी । उदगुत्तरस्यां उत्तराफल्गुनी । तत्र तस्यां दिशि तं शूलं त्यजेत् ॥

अथ निषिद्धनक्षत्राणां वर्जनीयघटिका आह—

**यमपूर्वाग्निमघानां नगभूपमकृतिशूलिनः क्रमशः ।**
**घटिकास्त्याज्या गमने मनवो द्वीशेन्द्रसार्पमरुतां च ॥१३॥**

यमो भरणी तस्याः प्रथमाः सप्त घटिकास्त्याज्याः । एवं पूर्वात्रयस्य षोडश । अग्निः कृत्तिका तस्या एकविंशतिः । मघाया एकादश । विशाखाज्येष्ठाऽऽश्लेषास्वातीनां मनवश्चतुर्दश घटिका गमने त्याज्याः । अर्थाद्रोहिण्यादीन्यवशिष्टानि मध्यमानि ॥

**स्वातीपित्र्याग्निपूर्वार्धे चित्राऽऽश्लेषान्तकोत्तरम् ।**
**त्यजेद्याने मघां स्वातीं सम्पूर्णामुशनोमते ॥ १४ ॥**

उशनसः शुक्रस्य मते स्वात्यादीनां पूर्वार्धं चित्रादीनामुत्तरार्धं मघा स्वाती च सम्पूर्णां याने त्यजेत् ॥

अथ योगिनीमाह—

**पूर्वोत्तराग्निनिर्ऋतीयमपाशिवायु-**
**शैन्यो दिशः प्रतिपदादिषु च द्विवारम् ।**

**स्थाप्या अमान्तमिति योगिनिचक्रमेत-**
**द्द्यूते गमे त्यजत सम्मुखवामभागे ॥ १५ ॥**

प्रतिपदादिष्वमावास्यान्तासु षोडश तिथिषु पूर्वोत्तराग्निनिर्ऋतिदक्षिणपश्चिमवायव्यैशानाख्या दिशो द्विवारं स्थाप्याः । यथा प्रतिपन्नवम्योः पूर्वा द्वितीयादशम्योरुत्तरेत्यादि । इतीदं योगिनीचक्रं ज्ञेयम् । एतद्द्यूते गमने च सम्मुखे वामभागे च त्यजत । यथा—पूर्वस्यां गन्तुः प्रतिपन्नवम्योर्योगिनी सम्मुखेऽस्ति । दक्षिणस्यां गन्तुर्वामभागे सा त्याज्या एवमुत्तरत्रोह्यम् ॥

अथ कालशूलमाह द्वाभ्याम्—

**दिनस्य प्रथमे त्र्यंशे ध्रुवैर्मिश्रैश्च न व्रजेत् ।**
**तीक्ष्णैर्मध्येऽन्तिमे क्षिप्रैरथ त्र्यंशे निशोऽपि न ॥ १६ ॥**

दिनस्य प्रथमे त्र्यंशे । पूर्वाह्न इति यावत् । ध्रुवैर्मिश्रैश्च नक्षत्रैर्न व्रजेत् । मध्यमे त्र्यंशे तीक्ष्णैर्दारुणनक्षत्रैर्न व्रजेत् । अन्तिमे त्र्यंशे क्षिप्रैर्न व्रजेत् । एवं रात्रेरपि प्रथमादित्र्यंशे मृद्वादिनक्षत्रैर्न व्रजेत् ॥

**प्रथमे मृदुभैरुग्रैर्मध्यमे चरमे चरैः ।**
**श्रुत्यर्कमृगपुष्यैस्तु व्रजेदेतन्न चिन्तयेत् ॥ १७ ॥**

चरमेऽन्तिमे त्र्यंशे चरनक्षत्रैर्न व्रजेत् । अत्र प्रतिप्रसवमाह—श्रुतीति । श्रवणहस्तमृगपुष्यैः सर्वदा व्रजेत् । एतत्कालशूलं न चिन्तयेत् ॥

**आश्विने शुक्लदशमी विजयाख्याखिले शुभा ।**
**प्रयाणेषु विशेषेण किं पुनः श्रवणान्विता ॥ १८ ॥**

स्पष्टम् ॥

अथ नक्षत्राणां जीवपक्षादिसंज्ञाः सफला आह चतुर्भिः—

**त्रयोदशमितास्तारा भुक्ता भोग्याश्च राहुणा ।**
**प्रथमो जीवपक्षः स्यान्मृतः पक्षस्तथापरः ॥ १९ ॥**

राहुणा सदा वक्रगेण भुक्तास्त्रयोदशसङ्ख्यास्तारा जीवपक्षः स्यात् ।

जीवपक्षसंज्ञाः स्युः । तथा राहुणा भोग्यास्तारास्त्रयोदश मृतपक्षसंज्ञाः । यथा—राहुर्हस्तनक्षत्रेऽस्ति तदा तेन मुक्तानि चित्रास्वातीप्रमुखानि पूर्वाभाद्रपदान्तानि त्रयोदश जीवपक्षः । तद्भोग्यानि उत्तराफल्गुनीपूर्वाफल्गुनीमघाऽऽश्लेषादीनि रेवत्यन्तानि त्रयोदश मृतपक्षः ॥

राहुभं कर्तरीसंज्ञं ग्रस्तं पञ्चदशं ततः ।
मृतभाद्ग्रस्तभं श्रेष्ठं ग्रस्तभात्कर्तरी शुभा ॥ २० ॥

राहुणाऽऽक्रान्तं नक्षत्रं कर्तरीसंज्ञम् । यथा हस्तस्थे राहौ हस्त-कर्तरीसंज्ञः । ततः कर्तरीसंज्ञकात्पञ्चदशं भं ग्रस्तसंज्ञम् । यथोत्तरभाद्रपदाख्यम् । मृतभात् मृतपक्षाख्यनक्षत्राद्ग्रस्तभं यात्रायां श्रेष्ठम् । ग्रस्तभाच्च कर्तरी शुभा ॥

जीवे शशी मृते सूर्यः शुभः स्यात्त्वत्ययोऽधमः ।
द्वौ जीवेऽतिशुभौ तौ चेन्मृते स्यातां मृतिप्रदौ ॥ २१ ॥

जीवपक्षे रवौ सति मृतपक्षे शशी न शुभः । व्यत्यये त्वधमः । द्वौ सूर्याचन्द्रमसौ जीवे जीवपक्षे तिष्ठतश्चेदतिशुभौ शुभतरौ । तौ द्वौ मृतपक्षे तिष्ठतश्चेन्मृतिप्रदौ स्याताम् ॥

जीवे चन्द्रे यायिजयो जीवे स्थायिजयो रवौ ।
उभौ जीवे सन्धिकरावुभयोरशुभौ मृते ॥ २२ ॥

जीवपक्षे चन्द्रे सति यात्रायां यायिजयः वैरिणमुद्दिश्य जिगमिषुर्यायी तस्य जयः । रवौ जीवपक्षे सति स्थायिजयः स्वदेशे दुर्गं हत्वा स्थितः स्थायी तस्य जयः । उभौ शशिसूर्यौ जीवपक्षे स्थितौ उभयोर्यायिस्थायिनोः सन्धानकर्तारौ । मृतपक्षे स्थितौ तूभयोरशुभौ पराजयकरौ ॥

अथ पथि राहुचक्रमाह द्वाभ्याम्—

धुर्येशाविष्यदृश्य मोक्षमार्गेऽन्त्येन्द्वर्कविशाखमघादनेयम् ।
इदयं पुमर्धेषु निधाय मानि मोक्षं स्वर्गः पथि राहुचक्रम् २३

अथ रेवत्यादीनि मोक्षमार्गे लेख्यानि । इत्थं पुरुषार्थस्थानेषु भानि निधाय न्यस्य स्वरशास्त्रज्ञैः पथि राहुचक्रं प्रोक्तम् ॥

**धर्मेऽश्विपुष्याद्दिशतश्रविष्ठाद्वीशात्तुराधर्क्षमथार्थमार्गे ।**
**याम्यानिलेन्द्रादितिपित्र्यपूभाश्रवोऽथ कामे भगतक्षमूलम् २४**

अश्विन्याद्युक्तसप्तनक्षत्राणि धर्मे धर्ममार्गे लेख्यानि । धर्ममार्गसंज्ञानीत्यर्थः । तत्रादिराश्लेषा । श्रविष्ठा' धनिष्ठा । अथेत्यनन्तरं भरण्याद्युक्तनक्षत्राणि अर्थमार्गे लेख्यानि । तत्र पूभा पूर्वाभाद्रपदा । अथ पूर्वादीनि काममार्गे लेख्यानि । तत्र तक्षा चित्रा विधिरभिजित् ॥

अथास्य चक्रस्य फलमाह—

**चेद्धर्मेऽर्केऽर्थमोक्षस्थश्चन्द्रोऽर्थे धर्ममोक्षगः ।**
**कामे धर्मार्थमोक्षस्थो मोक्षे धर्मगतः शुभः ॥ २५ ॥**

अर्के धर्मे धर्ममार्गस्थे सति चन्द्रोऽर्थमोक्षस्थः अर्थमार्गे मोक्षमार्गे वा तिष्ठति चेच्छुभः । अथार्थेऽर्थमार्गेऽर्के सति चन्द्रो धर्ममोक्षगः धर्ममार्गे मोक्षमार्गे वा स्याच्छुभः । अथ काममार्गे रवौ सति चन्द्रो धर्मार्थमोक्षस्थः धर्मेऽर्थे मोक्षे वा तिष्ठति तदा शुभः । अथ मोक्षेऽर्के सति चन्द्रो धर्मगतः शुभः । अर्थाद्विपरीतस्थितयोः सूर्याचन्द्रमसोरशुभकारत्वं ज्ञेयम् ॥

अथ कुलाकुलादिगणान्सफलानाह त्रिभिः—

**पूर्वाश्वीज्येन्द्रमघाचित्राग्नीन्दुश्रुतिद्विशाः ।**
**मन्वर्काष्टचतुर्थ्यः कविकुजवारौ गणः कुलाख्योऽयम् २६**

पूर्वात्रयमश्विनीपुष्यज्येष्ठामघाचित्राकृत्तिकामृगश्रवणविशाखानक्षत्राणि । चतुर्दशीद्वादशयष्टमीचतुर्थ्यस्तिथयः । भृगुभौमवारौ चेत्ययं गणः प्रत्येकं कुलसंज्ञकः ॥

**ध्रुववाताहिधनिष्ठामित्रादित्यान्त्यहस्तयाम्यानि ।**
**विषमास्तिथ्यः शनिरविशशिगुरुवारा गणो भवेदकुलः२७**

उत्तरात्रयरोहिणीस्वात्याश्लेषाधनिष्ठानुराधापुनर्वसुरेवतीहस्तभरण्यो न-क्षत्राणि । विषमास्तिथ्यः प्रतिपत्तृतीयादयः शन्यादयो वाराश्चेति प्रत्ये-कमकुलसंज्ञो गणो भवेत् ॥

**मूलशतार्द्राविधिभं दशषड्द्वितिथिः कुलाकुलो ज्ञश्च ।**
**स्थायी जयति कुलाख्ये यायी त्वकुले कुलाकुले सन्धिः २८**

विधिभमभिजित् । मूलादि प्रसिद्धम् । दशमी षष्ठी द्वितीया च तिथिः । ज्ञो बुधवारश्च प्रत्येकं कुलाकुलसंज्ञोऽयं गणः । फलमाह—स्था-यीति । कुलाकुलसंज्ञके नक्षत्रादौ युद्धारम्भे च सति स्थायी राजा जयति । अकुलसंज्ञके नक्षत्रादौ युद्धारम्भे यायी राजा जयति । कुला-कुलसंज्ञके युद्धं कुर्वतोः स्थायियायिनोः परस्परसन्धिः स्यात् ॥

**पौषादिचैत्रान्तमकालवृष्टिस्तस्यां न धीमान्दिनसप्तकान्तः ।**
**नीहारविद्युत्स्तनितेऽपि तद्वद्गच्छेदकृच्छ्रागमनं यदीच्छेत् २९**

पौषमासमारभ्य चैत्रमासपर्यन्तमासचतुष्टयमध्ये वृष्टिश्चेदकालवृष्टि-र्ज्ञेया तस्यां सत्यां दिनसप्तकमध्ये न गच्छेत् । यदि सुखेन पुनरागमन-मिच्छेत् । तद्वदकालवृष्टाविवाकालनीहारादौ च दिनसप्तकं न गच्छेत् ॥ तत्र नीहारस्तुषारः । स्तनितं घनगर्जितम् ॥

**यद्यम्बुना गोष्पदपूर्तिमात्रमकालवृष्टिः किल तत्र जह्यात् ।**
**आवश्यकेऽह्यानि च पौषतस्त्रिद्व्येकानि चैत्रे घटिकाद्वयं च ३०**

अम्बुना गोष्पदपरिमितखातस्य पूर्तिमात्रमकालवृष्टिश्चेत्तत्रोक्तं दिन-सप्तकं जह्यात् । तत्राप्यावश्यके कार्ये तु पौषेऽकालवृष्टौ त्रीण्यहानि जह्यात् । माघे द्वे अहनी जह्यात् । फाल्गुने एकमहः । चैत्रे तु घ-टिकाद्वयम् ॥

अत्यावश्यकत्वे परिहारमाह—

**अत्यावश्यकयात्रायां गर्जितेऽकालवर्षणे ।**
**सूर्येन्दुबिम्बे सौवर्णे दत्त्वा गच्छेद्द्विजातये ॥ ३१ ॥**

अत्यन्तावश्यकगमने तु अकालगर्जितेऽकालवर्षणे च सुवर्णनिर्मिते सूर्यचन्द्रबिम्बे ब्राह्मणाय दत्वा गच्छेत् ॥

अथायनशूलमाह द्वाभ्याम्—

**सौम्यायने सूर्यचन्द्रौ व्रजेत्प्राचीं तथोत्तराम् ।**
**दक्षिणायनगौ तौ चेत्पश्चिमां दक्षिणां व्रजेत् ॥ ३२ ॥**

सूर्यचन्द्रावुदगयने स्थितौ चेत्पूर्वामुत्तरां वा गच्छेत् । न त्वितराम् । तौ सूर्यचन्द्रौ दक्षिणायनगौ चेत्पश्चिमां दक्षिणां वा व्रजेत् ॥

**भिन्नायनत्वेऽथ तयोः सूर्यायनदिशो दिवा ।**
**चन्द्रायनदिशो रात्रौ व्यत्ययेऽत्याहितं भवेत् ॥ ३३ ॥**

अथ तयोः सूर्यचन्द्रयोरयनभेदे सति दिवा गम्यते चेत्सूर्यायनस्य दिशो गच्छेत् । उदगयने सूर्यश्चेदुत्तरां पूर्वां वा दक्षिणायने चेद्दक्षिणां पश्चिमां वा गच्छेदित्यर्थः । अथ रात्रौ गम्यते चेच्चन्द्रायनदिशो चन्द्र उदगयनस्थे प्राचीमुत्तरां वा दक्षिणायने चेत्प्रतीचीं दक्षिणां वा गच्छेदित्यर्थः । मकरादिषट्कमुत्तरायणं कर्कादिषट्कं दक्षिणायनम् ॥

अथ त्रेधा सम्मुखशुक्रदोषमाह—

**दिशि यत्रोदेति यत्र याति गोलभ्रमेण च ।**
**यत्र याति द्वारभेषु शुक्रस्तां न दिशं व्रजेत् ॥ ३४ ॥**

शुक्रो यत्र प्राच्यां प्रतीच्यां वा दिशि कालांशवशेनोदेति उदयं प्राप्नोति तत्र गन्तुः पुंसः शुक्रः सम्मुखो भवति । अतस्तां दिशं न यायात् । अथ वा गोलभ्रमेण उत्तरदक्षिणगोलभ्रमवशेन यत्रोत्तरस्यां दक्षिणस्यां वा याति तत्र गन्तुः पुंसः शुक्रः सम्मुखः मेषादिषट्के उत्तरगोलः तुलादिषट्के दक्षिणगोलः । अथ वा यत्र यस्यां दिशि द्वारभेषु कृत्तिकादिद्वारनक्षत्रन्यासवशेन याति तत्र दिशि गन्तुः सम्मुखः शुक्रः स्यात् । द्वारनक्षत्राणि तु वक्ष्यति । "सप्त सप्ताग्निभाद्भानि न्यसेत्प्राच्यादिषु क्रमात्" इति ॥

**न व्रजेत्सम्मुखे ज्ञेऽपि पृष्ठसंस्थे जयेद्रिपून् ।**
**प्रतिशुक्रादिचिन्ताऽऽद्यगमे युधि च नान्यथा ॥ ३५ ॥**

एवं ज्ञे बुधेऽपि सम्मुखे सति न व्रजेत् । पृष्ठदिक्संस्थे बुधे रिपून् जयेत् । इयं प्रतिशुक्रादिचिन्ता सम्मुखशुक्रसम्मुखबुधवक्रादिविचारणा आद्यगमे प्रथमयात्रायां राज्ञां तु युधि समरयात्रायामेव ज्ञेया । अन्यथा द्वितीययात्रादौ चिन्ता न कार्येत्यर्थः ॥

**शुक्रान्धोन्त्याश्वियाम्यस्थे कृत्तिकाद्याङ्घ्रिगे विधौ ।**
**तदा न दुष्टफलभाक्सम्मुखो दक्षिणोऽपि सन् ॥ ३६ ॥**

अन्त्याश्वियाम्यस्थे रेवत्यादिनक्षत्रत्रयस्थे चन्द्रे तथा कृत्तिकाद्याङ्घ्रिगे कृत्तिकाप्रथमचरणस्थे चन्द्रे सति शुक्रोऽन्धो ज्ञेयः। दृष्टोऽपि दर्शनकार्यं न करोतीत्यर्थः । अतस्तदा सम्मुखः सन् दक्षिणभागस्थो वा दुष्टफलदो न भवति ॥

**जीवः शुक्रः शशाङ्को वा मार्गमध्येऽस्तगो यदि ।**
**तत्रैव निवसेद्राजा यावदभ्युदितो भवेत् ॥ ३७ ॥**

स्पष्टम् ॥

**रविशुक्रारराह्वार्किचन्द्रेज्ञेज्या दिगीश्वराः ।**
**दिगीशे केन्द्रगे गच्छेन्न तु लालाटिनि क्वचित् ॥ ३८ ॥**

एते दिशां प्राच्यादीनां स्वामिनः । यद्दिग्गमनमिष्टं तद्दिक्स्वामिकेन्द्रस्थे गच्छेत् । लालाटिनि तु कचिन्न गच्छेत् । यदि लालाटिव्यतिरिक्तकेन्द्रस्थाने दिगधीशस्थितस्तर्हि यात्रा शुभाऽन्यथा त्वशुभेत्यर्थः ॥

अथ लालाटिकानाह—

**लग्नेऽन्त्याये दशमे नवमूर्खो सप्तमे द्विपत्पुत्रे ।**
**हिबुके त्रिधने प्राच्याः क्रमशो लालाटिका दिशामीशाः ३९**

प्राच्यादिदिक्षु क्रमेण लग्नादेतेषु स्थानेषु स्थिता दिगीशा लालाटा उच्यन्ते । यथा—लग्ने सूर्यः पूर्वस्यां गन्तुर्लालाटिकः । एवं शुक्रो

व्यये लाभे च आग्नेय्याम् । दशमस्थो भौमो दक्षिणस्याम् । नवाष्टमस्थो राहुर्नैर्ऋत्याम् । शनिः सप्तमे पश्चिमायाम् । चन्द्रः षष्ठे पञ्चमे वायव्याम् । बुधश्चतुर्थे उत्तरस्याम् । गुरुस्त्रिद्वितीये ईशान्याम् ॥

अथ पर्युषितयात्रायोगत्रयमाह—

**प्रस्थाय हस्तैन्दवमित्रभेषु**
**स्थित्वा मरुत्त्वाष्ट्रशिवेन्द्रभेषु ।**
**गच्छेत्त्रिदैवादितिमूलभेषु**
**ग्रामाद्बहिर्दिग्विजयाय राजा ॥ ४० ॥**

स्वगृहात्प्रन्तव्यदिगभिमुखं कस्यचिदिष्टस्य गृहे हस्तनक्षत्रे प्रस्थाय गत्वा स्वातीचित्रयोस्तत्रैव स्थित्वा विशाखायां तद्गृहं त्यक्त्वा राजा दिग्विजयाय ग्रामाद्बहिर्गच्छेदयमेको योगः । एवमेव मृगशीर्षे गत्वा आर्द्रायां तत्र स्थित्वा पुनर्वसौ गच्छेदयं द्वितीयो योगः । तथा अनुराधायां प्रस्थाय ज्येष्ठायां स्थित्वा मूले गच्छेदयं तृतीयो योगः । योगत्रयस्य विजयः फलम् ॥

**सूर्यभाच्चन्द्रभं गण्यं पक्षादितिथिवारयुक् ।**
**नवाप्तं सप्तशेषं चेद्धीवरं गमने हितम् ॥ ४१ ॥**

सूर्याधिष्ठितनक्षत्रान्नित्यनक्षत्रं गणयित्वा प्रतिपदादितिथियुक्तं वारयुक्तं च कृत्वा नवभिर्विभज्य शेषं सप्तमितं चेत् हीवराख्यो योगो यात्रायां हितकर इत्यर्थः ॥

अथ सर्वाङ्कज्ञानमाह—

**शुक्लादितिथिवारर्क्षयोगोऽश्वैरष्टभिस्त्रिभिः ।**
**त्रिस्थस्तष्टोऽवशिष्टश्चेत्सर्वाङ्कः सार्वकामिकः ॥ ४२ ॥**

शुक्लप्रतिपदादितिथिवारनक्षत्राणां योगः स्थानत्रये स्थाप्यः । क्रमेण सप्तभिरष्टाभिस्त्रिभिश्च तष्टः कार्यः सर्वत्राङ्कोऽवशिष्टश्चेत्सार्वकामिकः । जयादिकामना सिद्ध्यतीत्यर्थः ॥

**आदिमध्यावसानेषु शून्यं तत्र भवेद्यदि ।**
**क्रमाद्भवन्ति यात्रायां दुःखदारिद्र्यमृत्यवः ॥ ४३ ॥**

तत्र तदिष्टेषु तेषु योगेष्वादिस्थाने शून्यशेषे यात्राया दुःखम् । द्वितीयस्थाने शून्यशेषे दारिद्र्यम् । चरमस्थाने शून्ये सति मृत्युरित्यर्थः ॥

**रविभादिन्दुभं सप्तघ्नं चेत्तद्द्विशेषकम् ।**
**आडलः षड्विशेषं चेद्भ्रमणं चोभयं त्यजेत् ॥ ४४ ॥**

सूर्यनक्षत्राच्चन्द्रनक्षत्रं गणयित्वा सप्तभिर्भक्तं कार्यम् । शून्यं द्विमितं वा शेषं चेत् आडलाख्यो योगः । षण्मितं त्रिमितं वा शेषं चेद्भ्रमणाख्यो योगः । एतदुभयं यात्रायां त्यजेत् ॥

अथैकदिनसाध्ये निर्गमप्रवेशरूपे कार्ये किं विचार्यमित्यत आह—

**यद्येकस्मिन्नेव दिने पुराद्गच्छेत्पुरान्तरम् ।**
**प्रावेशिकी कालशुद्धिस्तदा ज्ञेया न यात्रिकी ॥ ४५ ॥**

स्वपुराच्छत्रुपुरं यद्येकस्मिन्नेव दिने गच्छेत्तदा शत्रुपुरं प्रति प्रवेशार्थं प्रावेशिकी कालशुद्धिश्चिन्त्या न तु यात्रिकी ॥

**ऋक्षशूलं वारशूलं प्रतिशुक्रं च योगिनीम् ।**
**विचारयेन्नैकदिने प्रवेशो निर्गमोऽपि चेत् ॥ ४६ ॥**

एकदिन एव पुरान्निर्गमः पुरान्तरे प्रवेशोऽपि चेत्तत्र नक्षत्रशूलादिकं न विचारयेत् ॥

**प्रवेशान्निर्गमो नेष्टः प्रवेशो निर्गमादपि ।**
**जिष्णोः कदापि नवमे धिष्ण्ये वारे तिथौ तथा ॥ ४७ ॥**

जिष्णोर्जयशीलस्य । जयकाङ्क्षिण इति यावत् । गृहप्रवेशनक्षत्रान्नवमे नक्षत्रे निर्गमो नेष्टः । निर्गमनक्षत्राच्च प्रवेशो नवमे नेष्टः । तथा गम-

१ स्वनामसदृशफलदोऽयं योगः प्रवसतां प्रवासक्लेशोत्पादकः । २ अयमपि चिरं प्रवासादधिकप्रवासकारको योगः स्वनामसदृशात् ।

नवाराज्ञवगे प्रवेशः प्रवेशवाराच नवमे गमनं निषिद्धम् । एवं गमनतिथेर्नवमतिथौ प्रवेशः प्रवेशतिथेर्नवमे गमनं च निषिद्धम् ॥

अथ नौकायाने विशेषमाह—

**नौकायानं जलचरराशौ लग्ने तदंशे वा ।**
**दिग्विजयाय निरुक्तं यात्रोक्तं ज्ञेयमन्यत्तु ॥ ४८ ॥**

जलचरराशौ मकरकुम्भमीनकर्करूपे लग्ने सति अथ वा तदंशे जलचरनवांशे सति नौकया गमनं दिग्विजयाय कथितम् । अन्यत्तिथिशुद्ध्यादिकं तु यात्रोक्तं ज्ञेयम् ॥

नौकाचक्रमाह—

**नौकाचक्रेऽर्कभात्त्रीणि षट् त्रयोदश षट् क्रमात् ।**
**अशुभानि शुभानि स्युरशुभानि शुभानि च ॥ ४९ ॥**

सूर्यनक्षत्राच्चन्द्रनक्षत्रे गणिते प्रथमानि त्रीण्यशुभानि । ततः षट् शुभानि । ततस्त्रयोदशाशुभानि । ततः षट् शुभानि । अत्राभिजित्सहितं गणनम् ॥

**पूर्वादिदिक्षु मेषाद्याः क्रमात्त्रिः परिवर्तनात् ।**
**दिग्द्वारराशयस्तत्र यात्रायां रात्रिनायकः ॥ ५० ॥**
**सम्मुखो दक्षिणः श्रेष्ठः पृष्ठे वामेऽतिनिन्दितः ।**

मेषाद्या राशयः पूर्वादिदिक्षु त्रिवारं परिवर्तनाद्दिग्द्वारराशयो भवन्ति । यथा—मेषः पूर्वस्यां वृषो दक्षिणस्यां मिथुनं पश्चिमायां कर्क उत्तरस्यां एवं पुनः सिंहादयो धनुरादयश्च पूर्वादिषु ज्ञेयाः । तत्र स्थितो रात्रिनायकश्चन्द्रो यात्रायां सम्मुखो दक्षिणश्च श्रेष्ठः । वामे पृष्ठे चाऽतिनिन्दितः । यथा—मेषस्थश्चन्द्रः पूर्वस्यां गन्तुः सम्मुख उत्तरस्यां गन्तुर्दक्षिणो भवति ॥

**लग्ने यद्दिग्द्वारराशिस्तां दिशं व्रजतां जयः ॥ ५१ ॥**

यद्दिग्द्वारराशिः यां दिशं जिगमिषति तस्या दिशो द्वारराशिर्यदि

लग्नेऽस्ति तर्हि तां दिशं गच्छतां जयः स्यात्। यथा—मेषलग्ने पूर्वस्यां गन्तुर्जयः॥

**दिग्द्वारितस्तृतीयश्चेद्राशिर्लग्ने न तां व्रजेत्।**
**प्रातर्मध्याह्नगोधूलीनिशीथं पूर्वतस्त्यजेत्॥ ९२॥**

दिग्द्वारराशेस्तृतीयो राशिर्लग्ने स्थितश्चेत्तां दिशं न व्रजेत्। यथा—मिथुनलग्ने पूर्वस्यां न गच्छेत्। प्रातः प्रातःसमयं पूर्वस्यां त्यजेत्। मध्याह्नमभिजिन्मुहूर्तं दक्षिणस्यां त्यजेत्। गोधूलिसमयं पश्चिमायाम्। अर्धरात्रमुत्तरस्याम्॥

परिघदण्डमाह—

**सप्त सप्ताग्निभाद्भानि न्यसेत्प्राच्यादिषु क्रमात्।**
**अग्निवायुदिशोर्दण्डः परिघस्तं न लङ्घयेत्॥ ९३॥**

अग्निभात् कृत्तिकातः सप्त भानि पूर्वस्याम्। मघातः सप्त दक्षिणस्याम्। अनुराधातः सप्त पश्चिमायाम्। धनिष्ठातः सप्तोत्तरस्यां न्यसेत्। तत्राग्नेयवायव्यकोणमध्योपनिबद्धा रेखा परिघो दण्डः स्यात्। तं सर्वथा नोल्लङ्घयेत्। धनिष्ठाद्याश्लेषान्तचतुर्दशनक्षत्रैर्दक्षिणां पश्चिमां वा न गच्छेत्। मघादिश्रवणान्तचतुर्दशनक्षत्रैरुत्तरां पूर्वां वा न गच्छेदित्यर्थः॥

अथ विदिक्षु गमने क्रममाह—

**प्राग्भैरग्नेर्दिशं गच्छेद्याम्यभैर्नैर्ऋतीं दिशम्।**
**पाश्चात्यभैस्तु वायव्यामैशानीं भैरुदग्भवैः॥ ९४॥**

प्राग्भैः कृत्तिकादिसप्तनक्षत्रैराग्नेयीं दिशं गच्छेत्। याम्यभैर्मघादि सप्तभैर्नैर्ऋतीं गच्छेत्। पाश्चात्यभैरनुराधादिभिर्वायव्यां गच्छेत्। उदग्भवैर्धनिष्ठादिसप्तनक्षत्रैरैशानीं गच्छेत्॥

अथावश्यके परिघापवादमाह—

**दिग्लग्नशुद्धौ परिघमुल्लङ्घ्यावश्यके विधौ।**
**व्रजेद्यदा चारशूलपृष्ठशूलं च नो भवेत्॥ ९५॥**

आवश्यकेऽगतिके विधौ कार्ये दिग्लग्नशुद्धौ यां दिशां गच्छेत् तद्दिग्द्वारीनां पूर्वोक्तानां शुभफलदातृग्रहानुकूल्यसाहित्ये सति वारशूलनक्षत्रशूलराहित्ये परिघमुल्लङ्घ्यापि गच्छेदित्यर्थः ॥

**सर्वदिग्द्वारिकं विष्णुपुष्यपौष्णकराश्विभम् ।**
**वसुमित्रेन्दुभं तत्र परिघादि न दुष्यति ॥ ९६ ॥**

श्रवणपुष्याद्युक्तनक्षत्राष्टकं सर्वदिग्द्वारिकसंज्ञम् । तत्सर्वदिक्षु शुभम् । अतस्तत्र परिघादिदोषो नास्ति ॥

**वर्गोत्तमगतं लग्नं वर्गोत्तमगतः शशी ।**
**प्रयाणसमये यस्य तस्य स्याद्विजयः सदा ॥ ९७ ॥**

प्रयाणसमये वर्गोत्तमनवांशस्थं लग्नं वर्गोत्तमनवांशस्थश्चन्द्रोऽपि विजयकर इत्यर्थः ॥

अथ लग्ने ग्रहबलमाह—

**प्रयाणे शुभाः केन्द्रकोणेषु शस्ता**
**खलास्त्र्यायषट्खेष्वनिष्टः शनिः खे ।**
**कविः सप्तमे ग्लौः षडष्टान्त्यलग्ने**
**विलग्नेश्वरोऽप्यस्तषष्ठाष्टमान्त्ये ॥ ९८ ॥**

केन्द्रे १ । ४ । ७ । १० कोणे ९ । ५ च शुभग्रहाः प्रयाणे यात्रायां शस्ताः । खलाः पापास्तृतीयैकादशषष्ठदशमेषु स्थिताः शस्ताः। तत्र खे दशमे शनिरनिष्टः । तथा सप्तमे भृगुरनिष्टः। ग्लौश्चन्द्रः षडष्टद्वादशेषु लग्ने च नेष्टः । लग्नाधिपतिरपि सप्तमषष्ठाष्टमव्ययेषु नेष्टः ॥

**केन्द्रे वक्री वक्रिवर्गो लग्ने वारश्च वक्रिणः ।**
**कुम्भः कुम्भनवांशश्च लग्ने त्याज्याः प्रयत्नतः ॥ ९९ ॥**

केन्द्रस्थाने वक्री ग्रहस्त्याज्यः । तथा लग्ने वक्रिग्रहस्य षड्वर्गस्त्याज्यः । वक्रिग्रहस्य वारोऽपि त्याज्यः । तथा कुम्भलग्नं लग्ने कुम्भनवांशश्च त्याज्यः ॥

मीनलग्ने तदंशे वा यातुर्मार्गोऽतिदुःखदः ।
लग्ने जनुर्लग्नभेशौ सद्ग्रहौ चेच्छुभस्तदा ॥ ६० ॥

मीनलग्ने मीनांशे वा यातुर्मार्गोऽनिष्टदः । जनुर्लग्नभेशौ जन्मलग्न-जन्मराश्योः स्वामिनौ शुभग्रहौ लग्ने चेद्भवतस्तदा मार्गः शुभः ॥

लग्ने जनुस्तनुभतोऽष्टमं तत्पतिरत्र वा ।
शत्रुलग्नभतः षष्ठं तत्पतिर्वा मृतिप्रदः ॥ ६१ ॥

जनुस्तनुभतः जेतव्यशत्रोर्जन्मलग्नतो जन्मराशितो वा षष्ठं स्थानं तत्स्वामी वा अत्र लग्ने स्थितश्चेन्मृतिप्रदो गन्तुरिति शेषः ॥

अथो भृगोर्वक्रास्तादिदोषमाह—

वक्रास्तनीचोपगते विवर्णे विजिते सिते ।
शत्रुक्षेत्रे तदंशे वा तद्दृष्टे गमनं न सत् ॥ ६२ ॥

सिते शुक्रे वक्रोपगते अस्तोपगते नीचोपगते विवर्णे वर्णरहिते विजिते युद्धपराजिते शत्रुस्थानगते शत्रुक्षेत्रांशगते वा शत्रुनिरीक्षिते वा सति गमनं न सत् ॥

यज्जन्मकाले यो भावः शुभयुक्तः स चेत्तनौ ।
यात्राकाले भवेत्तस्य विजयः स्यान्न संशयः ॥ ६३ ॥

यस्य जन्मकाले लग्नादिद्वादशस्थानेषु यो राशिः शुभग्रहयुक्तः स राशिस्तस्य यात्रायां लग्ने स्थितश्चेद्विजयः स्यात् संशयो नास्ति ॥

जन्मन्यर्काक्रान्तराशेर्द्वितीयो वेशिसंज्ञितः ।
स चेद्यात्रालग्नगतस्तदानीं व्रजतां जयः ॥ ६४ ॥

जन्मकाले सूर्याधिष्ठितराशितो द्वितीयो राशिर्वेशिसंज्ञितः । स चेद्यात्रालग्नगतस्तदानीं व्रजतां जयः स्यात् ॥

उक्तानुवादपूर्वकं वक्ष्यमाणयोगयात्रां प्रतिजानीते—

इत्यन्यसामान्यजनोपकृत्यै
यात्रामुहूर्ताः कतिचिन्निरुक्ताः ।

अथार्थसिद्ध्यै नृपतेर्जिगीषो-
रेषप्रयत्नः समरोद्यतस्य ॥ ६५ ॥

एवं राज्ञामन्येषां च सामान्यजनानामुपकाराय कतिचिद्गमनमुहूर्ताः कथिताः । अथ समरोद्यतस्य जेतुमिच्छोर्नृपतेरेवार्थसिद्धये एष वक्ष्यमाणः प्रयत्नः क्रियत इति शेषः ॥

अथैकैकश्लोकेनैकैकयोगमाह—

चन्द्रोऽष्टमे गुरुर्लग्ने षष्ठेऽर्को यस्य गच्छतः ।
तस्याग्रे न समर्था स्यात्स्थातुं प्रत्यर्थिवाहिनी ॥ ६६ ॥

यस्य गच्छतो नृपतेः यात्रायां लग्नादष्टमे चन्द्रः लग्ने गुरुः षष्ठे रविरेवंविधो योगश्चेत्तस्य पुरतः स्थातुमपि शत्रुसेना न शक्नोति । शत्रुसेना पराजिता भवेदित्यर्थः ॥

गुरुर्लग्ने कुजः षष्ठे रविराये शनिस्त्रिगः ।
तदा जयत्यरीन्राजा यदि शुक्रो न सम्मुखः ॥ ६७ ॥

स्पष्टम् ॥

लग्ने गुरुः परे लाभधनस्था यदि गच्छतः ।
खलमैत्रीव तस्याग्रे न तिष्ठेच्छत्रुवाहिनी ॥ ६८ ॥

यदि गच्छतो राज्ञः लग्ने गुरुः स्यात् । अन्ये ग्रहा एकादशद्वितीयस्थाश्चेत्तदा तस्याग्रे शत्रुसेना दुर्जनमैत्रीव न तिष्ठेत् । व्यर्था स्यादित्यर्थः॥

इन्दुर्द्यूने रविर्लग्ने धने ज्ञगुरुभार्गवाः ।
ईदृग्योगे व्रजन्राजा न चिरेण जयत्यरीन् ॥ ६९ ॥

द्यूने सप्तमे । न चिरेण किन्तु शीघ्रतया जयति ॥

बुधो धनेऽर्कः सहजे शुक्रो लग्ने भवेद्यदि ।
तदा यातुः प्रतापाग्नौ शलभीयन्ति शत्रवः ॥ ७० ॥

एवंविधे योगे यातुर्नृपस्य प्रतापलक्षणेऽग्नौ शलभा इव नश्यन्तीत्यर्थः॥

शनिः षष्ठे रविर्लग्ने चन्द्रमा दशमे यदि ।
लयं धनिकमैत्रीव तस्य याति द्विषच्चमूः ॥ ७१ ॥

तस्य द्विषच्चमूः शत्रुसेना धनिकस्य मैत्रीव लयं याति । एवंविधे योग यातुर्विजयः स्यादित्यर्थः ॥

लग्ने शनिकुजौ मध्ये रविर्दशमलाभगः ।
ज्ञशुक्रयोरन्यतमस्तदानीं व्रजतो जयः ॥ ७२ ॥

मध्ये दशमे रविः । बुधशुक्रयोर्मध्ये कश्चिद्दशमलाभगः । शेषं स्पष्टम् ॥

लाभत्रिरिपुगो भौमशन्योरन्यतमो यदि ।
भृगुज्ञेज्याश्च बलिनो योगेऽस्मिन्गच्छतो जयः ॥ ७३ ॥

भौमशन्योर्मध्ये कश्चिल्लाभत्रिषट्सु स्थितः यत्र कुत्रापि स्थिता भृगुबुधगुरवो बलिनः स्युस्तस्मिन्योगे गच्छतो राज्ञो जयः ॥

तुर्ये शुक्रबुधौ लग्ने गुरुरस्ते च चन्द्रमाः ।
खलास्तृतीये योगोऽयं विजयाय महीभुजाम् ॥ ७४ ॥

स्पष्टम् ॥

गुरुस्तनौ रविर्लाभे तृतीये शनिमङ्गलौ ।
शुक्रज्ञौ खे शशी द्यूने जययोगोऽतिदुर्लभः ॥ ७५ ॥

अयं जयदायकयोगोऽतिदुर्लभो ज्ञेयः ॥

बुधो बुद्धौ रविः शत्रौ शनिरभ्रे कविः सुखे ।
लग्नेऽन्यतम ईज्येन्द्वोर्योगोऽयं रामबाणवत् ॥ ७६ ॥

बुद्धौ पञ्चमे बुधः षष्ठे रविः दशमे शनिः चतुर्थे शुक्रः गुरुचन्द्रयोर्मध्ये एको लग्नेऽयं योगो रामबाणवज्जयकरः ॥

लग्ने बली बुधः केन्द्रे गुरुर्निर्बलचन्द्रमाः ।
धर्मत्रिषड्व्ययगतो योगोऽयं जयकृद्रणे ॥ ७७ ॥

निर्बलचन्द्रमा नीचादिस्थानस्थितः बलरहितश्चन्द्रो धर्मत्रिषड्व्ययगतो नवमषष्ठद्वादशानामन्यतमे स्थितः ॥

**अनवाष्टमदे पापा हिबुकत्र्यायगः कविः ।**
**केन्द्रस्थगुरुणा दृष्टो योगोऽयं धनलाभकृत् ॥ ७८ ॥**

पापग्रहाः अनवाष्टमदे नवमाष्टमसप्तमव्यतिरिक्तस्थाने स्थिताः केन्द्रस्थेन गुरुणा दृष्टः शुक्रश्चतुर्थतृतीयैकादशस्थानगतस्तथाविधोऽयं योगो धनलाभकरः स्यात् ॥

**लग्नारितुर्यकर्मस्थो बुधः सद्ग्रहवीक्षितः ।**
**अव्ययास्ततनौ पापा योगोऽयं विजयप्रदः ॥ ७९ ॥**

यदि लग्नषष्ठचतुर्थदशमस्थो बुधः शुभग्रहैरवलोकितः पापग्रहा व्ययसप्तमतनुस्थानरहितास्तर्ह्ययं योगो विजयप्रदः ॥

अथ योगद्वयमाह—

**जीवस्तनौ खलाः कर्मलाभगा विजयप्रदाः ।**
**बुधशुक्रौ मदे चन्द्रश्चतुर्थे विजयप्रदः ॥ ८० ॥**

लग्ने गुरुः दशमैकादशस्थाः पापाः एतद्योगादेते ग्रहा विजयप्रदाः। द्वितीयं योगमाह बुधेति—मदे सप्तमे ॥

**शुक्रः षष्ठे गुरुर्लग्ने चन्द्रमा अष्टमे यदि ।**
**योगेऽस्मिन्व्रजतां राज्ञां विजयः स्यात्पदे पदे ॥ ८१ ॥**

स्पष्टम् ॥

**हिबुके बुधशुक्रौ चेत्सप्तमे यदि चन्द्रमाः ।**
**योगोऽयं हन्त्यरिकुलं ब्रह्मद्वेषः कुलं यथा ॥ ८२ ॥**

यथा ब्रह्मद्वेषः कुलं हन्ति तथाऽयं योगः शत्रुसमूहं हन्ति ॥

**चतुर्थे चन्द्रमाः शुक्रबुधाभ्यां यदि संयुतः ।**
**लयं याति तदा शत्रुः कृतघ्नेषु यथा कृतम् ॥ ८३ ॥**

लयं नाशम् । कृतं हिताचरणम् ॥

**कुजः षष्ठे बुधस्तुर्ये गुरुरस्ते सितस्तनौ ।**
**शनिस्तृतीये योगोऽयं देशनाशाय वैरिणाम् ॥ ८४ ॥**

अस्ते सप्तमे ॥

**शुक्रोऽष्टमे रविः षष्ठे बुधोऽस्ते सहजे कुजः ।**
**जीवस्तनौ क्षितिपतेर्विपक्षक्षयकारकः ॥ ८५ ॥**

अस्ते सप्तमे । तनौ लग्ने । अयं योगो विपक्षक्षयकारकः शत्रुनाशकः ॥

**गुरुसूर्यसितास्तुर्यतृतीये शनिमङ्गलौ ।**
**षष्ठस्थितौ तदा गन्तुर्विजयः स्यान्न संशयः ॥ ८६ ॥**

यदा चतुर्थतृतीयस्थानस्थाः गुरुरविशुक्राः षष्ठस्थितौ शनिमङ्गलौ तदा गन्तुर्विजयः स्यात् ॥

**गुरुवारे षट्त्रिकर्मषड्लग्नहिबुकायगाः ।**
**क्रमेण यदि सूर्याद्या ग्रहाः सप्तातिदुर्लभाः ॥ ८७ ॥**

बृहस्पतिवासरे यदि षष्ठे रविस्तृतीये चन्द्रः दशमे भौमः षष्ठे बुधः लग्ने गुरुः चतुर्थे शुक्रः एकादशे शनिः एवं स्थिताः सप्त ग्रहा अति दुर्लभाः । अतोऽस्मिन्योगे विजयः स्यादेव ॥

अथ साभिधानं योगत्रयमाह—

**योगः स्याज्ज्ञेज्यशुक्राणां-यद्येकः केन्द्रकोणगः ।**
**उभौ चेदधियोगश्चेत्सर्वे योगाधियोगकः ॥ ८८ ॥**

बुधगुरुशुक्राणां मध्ये यद्येको बुधो वा गुरुर्वा शुक्रो वा केन्द्रकोणगः स्यात् । तदा योगाख्यो योगः स्यात् । उभौ चेद्बुधगुरू बुधशुक्रौ गुरुशुक्रौ वा स्थानैक्येन स्थानभेदेन वा केन्द्रकोणगौ स्याताम् । तदधियोगाख्यो योगः । सर्वे चेद्बुधगुरुशुक्राः केन्द्रकोणगाः स्युस्तदा योगाधियोगाख्यो योगः ॥

एषां फलमाह—

**क्षेमं योगेऽधियोगे स्यात्क्षेमं शत्रुजयस्तथा ।**
**योगाधियोगे भवति क्षेमं शत्रुक्षयः क्षितिः ॥ ८९ ॥**

योगे गच्छतो राज्ञः क्षेमं स्यात् । अधियोगे गच्छतः क्षेमं शत्रुक्षयश्च फलम् । योगाधियोगे गच्छतः क्षेमं शत्रुनाशो भूमिलाभश्च भवति ॥

**रिपुजन्मभलग्नाभ्यामष्टमो यदि लग्नगः ।**
**यात्राकाले नरपतेः करपञ्जरगो रिपुः ॥ ९० ॥**

रिपुजन्मभलग्नाभ्यां स्वशत्रोर्जन्मराशितो जन्मलग्नाद्वा योऽष्टमो राशिः सचेद्यात्राकाले लग्नोपगतः स्यात् । तदा रिपुर्नरपतेर्हस्तगतः स्यात् ॥

**शशी मध्ये बुधस्तुर्ये गुरुर्लग्ने सितः सुते ।**
**रविस्तृतीये भौमार्कौ षष्ठे योगोऽयमुत्तमः ॥ ९१ ॥**

मध्ये दशमे । सुते पञ्चमे । शेषं स्पष्टम् । अन्येऽपि बहवो योगाः प्रमिताक्षरायां द्रष्टव्याः ॥

ननु क्षीणस्याष्टमस्थस्य च चन्द्रस्याशुभत्वात्कथमत्र 'चन्द्रोऽष्टमे गुरुर्लग्ने' इत्यादौ तस्य शुभत्वमुच्यत इत्याशङ्क्याह—

**क्षीणोऽष्टमोऽपि चन्द्रः शुभफलदो योगमाहात्म्यात् ।**
**विषमपि जीवनहेतुर्भवति भिषग्भिर्महारसे क्षिप्तम् ॥ ९२॥**

क्षीणोऽप्यष्टमोऽपि चन्द्रो योगमाहात्म्यादत्र शुभफलदः स्यात् । अत्रार्थान्तरन्यासः । विषमपि वत्सनाभादि भिषग्भिर्वैद्यैर्महारसे क्षिप्तं सञ्जीवनहेतुर्भवति ॥

**पार्थक्येन खगानां फलमन्यद्योगजं चान्यत् ।**
**पीतापि पश्य हरिद्रा ताम्राभा सौधचूर्णयोगेन ॥ ९३ ॥**

आदित्यादिग्रहाणां पृथक्त्वेन फलं भिन्नम् । योगवशाच्च फलं भि-

सद्वाक्यं कार्यसिद्धिरस्त्वित्यादि वचनम् । आदर्शो दर्पणः । ससुतस्त्री पुत्रयुक्ता । वाद्यं मर्दलादि ॥

**विप्राः पूर्णघटाश्वस्वाशिविकापक्वान्यशोकं शवं**

**रिक्तः सत्वनुलोमगामिकलशः पुष्पं च वेदध्वनिः ।**

**गीतं बद्धपशुः सुवस्त्ररजकोद्दीप्ताग्नि गोरोचना-**

**नीत्याद्याः शकुनाः प्रयाणसमये दृष्टाः पुरोऽभीष्टदाः ॥**

विप्रौ च विप्राश्च विप्राः न त्वेकः । अशोकं लोकरोदनरहितं शवं मृतकशरीरम् । रिक्तो जलरहितः अनुलोमगामी स्वपश्चाद्भागगामी कलशो घटः । बद्धपशुः रज्ज्वादिना बद्धो वृषभादिः । सुवस्त्ररजकः शोभनानि निर्मलानि वस्त्राणि यस्य तादृशो रजकः । उद्दीप्ताग्निर्ज्वल्यमानोऽग्निः । शेषं प्रसिद्धम् । इत्याद्याः शकुनाः । आद्यशब्दात्सुवासिन्यादयः प्रयाणसमये पुरो दृष्टा अभीष्टफलदाः स्युः ॥

अथापशकुनानाह द्वाभ्याम्—

**नग्नासृग्बधिरान्धकुब्जविधवावन्ध्यापरिव्राजक-**

**क्लीबव्याधितमुक्तकेशपतितोन्मत्तक्षुधार्तोरगाः ।**

**तैलाभ्यक्तरजस्वलाऽऽर्द्रवसनव्यङ्गासुहृद्गर्भिणी-**

**क्रुद्धाङ्गारतुषेन्धनास्थिलवणं शिङ्खावसाकर्दमाः ९८**

नग्नोऽपरिहितवासाः कुमारव्यतिरिक्तः । असृग्रुधिरम् । परिव्राजकः संन्यासी । क्लीबो नपुंसकः । व्याधितोऽचिकित्स्यरोगवान् । मुक्तकेशोऽबद्धकेशः । पतितो मद्यपानादिना भ्रष्टः । उरगः सर्पः । तैलाभ्यक्तः कृततैलाभ्यङ्गः । आर्द्रवसनोऽशुष्कवस्त्रः । व्यङ्गश्छिन्ननासिकादिः । असुहृद्वैरी । क्रुद्धः कुपितः । इन्धनं काष्ठम् ॥

**वस्त्रादिस्खलनं कुटुम्बकलहो मार्जारयुद्धं तृणं**

**काषायी सरटः स्वगेहदहनं तक्रं गुडश्चर्म च ।**

तैलं मुण्डित औषधं च जटिलस्तूलं वमिर्दुर्वचः
कृष्णं धान्यमिति प्रयाणसमये दृष्टं पुरः कष्टदम् ॥९९॥

वस्त्रादेः वस्त्रकमण्डलुछत्रादेः स्खलनं सहसात्पतनम् । कापायो रागविशेषः तेन रक्तं वस्त्र काषायं तद्वान्कापायी । सरठः कृकलासः। मुण्डितो मुण्डितशिरस्कः । जटिलो जटावान् । तूलं कार्पासम् । वमिर्वमनम् । दुर्वचः स्वमुखोत्थं परमुखोत्थं वा दुष्टं वाक्यम् । कृष्णं धान्यं मापादि । शेषं प्रसिद्धम् । इति गमनसमये पुरो दृष्टं कष्टदं स्यात् ॥

अथान्यानपि शकुनापशुनानाह—

गोधाकोलशशाहीनां नामग्रहणमुत्तमम् ।
न दर्शनं न च रुतं व्यत्ययः कपिऋक्षयोः ॥ १०० ॥

गोधा सरठाकारः प्राणिविशेषः । कोलः सूकरः । शशः प्रसिद्धः । अहिः सर्पः । एषां नामग्रहणं स्वमुखेन परमुखेन वा नामोच्चारणं शुभम् । तेषां दर्शनं न शुभं रुतं शब्दश्च न शुभः । कपिर्वानरः ऋक्षो ऽच्छभल्लः तयोर्व्यत्ययः । कीर्तनं निषिद्धम् । दर्शनं रुतं च शुभमित्यर्थः॥

दक्षिणे भासकाकर्क्षरुरुवानरकुकुराः ।
वामे तु पिङ्गलापल्लीशिवादुर्गापिकाः शुभाः ॥ १०१ ॥

भासः पक्षिविशेषः । काकः प्रसिद्धः । ऋक्षोऽच्छभल्लः । रुरुर्मृगविशेषः । वानरः प्रसिद्धः । कुकुरः श्वा । एते यातुर्दक्षिणभागे उत्तमाः । पिङ्गला पक्षिविशेषः । पल्ली प्रसिद्धा । शिवा सृगाली । दुर्गा पोतकी । पिकः कोकिलः । एते गन्तुर्वामे प्रशस्ताः ॥

दक्षिणे पक्षिणः श्रेष्ठाश्चरन्तो रुरुवर्जिताः ।
मृगाश्च विषमास्ते चेद्धन्या वामे खरस्वनः ॥ १०२ ॥

पक्षिणो रुरुवर्जिता मृगाश्च दक्षिणभागे चरन्तो गच्छन्तः श्रेष्ठा उत्तमाः । तत्रापि मृगा नियमास्त्रिपञ्चसप्तादयश्चेद्धन्या अत्युत्तमाः स्युः। तथा वामभागे खरस्वनो गर्दभशब्दः श्रेष्ठः । कियतां देशकालभेदेन

नैष्फल्यमाह वराह —"न ग्रामेऽरण्यजो ग्राह्यो नारण्ये ग्रामगः क्वचित् । दिवाचरश्च नो रात्रौ न च रात्रिचरो दिवा ॥ द्वन्द्वरोगार्दितत्रस्तकलहामिषकाङ्क्षिण । आपगान्तरिता मत्ता न ग्राह्या. शकुना. क्वचित् ॥" इत्यादि ॥

अथावश्यककार्येऽपशकुनपरिहारमाह—

**कुलदेवतां प्रणम्य स्वर्णं साज्यं द्विजातये दत्वा ।**
**अपशकुनेऽपि कदाचिद्गच्छेदावश्यके कार्ये ॥ १०३ ॥**

स्पष्टम् ॥

**अपशकुनेऽपि प्रथमे गच्छेत्प्राणत्रयं स्थित्वा ।**
**प्राणांश्च षड्द्वितीये न लङ्घयेद्देहलं तृतीयेऽस्मिन् ॥१०४॥**

आवश्यके कार्ये सत्यपशकुने जाते प्राणत्रय प्राणायामत्रयमात्र स्थित्वा गच्छेत् । पुनरप्यपशकुने जाते प्राणायामषट्कं स्थित्वा गच्छेत् । ततोऽप्यपशकुने नैव गच्छेदित्यर्थ ॥ उक्त च कश्यपेन—"यायी विरुद्ध शकुनमादौ दृष्ट्वा प्रयत्नत । प्राणायामत्रय कुर्याद्द्वितीये द्विगुणाश्चरेत् ॥ तृतीये पुनरावृत्त्य शान्त्या यायाद्दिनान्तरे" इति ॥

**भये प्रवेशे समरे नष्टार्थस्य गवेषणे ।**
**नद्युत्तारे च शकुनोऽशुभोऽपशकुनः शुभः ॥ १०५ ॥**

भये भयसम्बन्धिनि कार्ये पलायनादिके प्रवेशे गृहप्रवेशे समरे संग्रामसमये नष्टार्थस्य गवेषणे समीक्षणे नद्युत्तारे नद्युत्तरणसमये यो भारद्वाजमयूर' इत्यादिना प्रागुक्त शकुन सोऽशुभ । यश्चापशकुनो नग्नासृग्' इत्यादिनोक्त स शुभ । अथ शिङ्काया विशेषमाहनारद — 'सर्वदिक्षु क्षुत नेष्ट गोक्षुत मरणप्रदम् । अफल तत्कृत यत्तु वृद्धपीनसवैतने ॥ औषधे वाहनारोहे विवाहे शयनासने । विद्यारम्भे बीजवापे क्षुत सप्तसु शोभनम् ॥" इति ॥

क्षौरं पञ्चदिनं पूर्वं दुग्धं तु दिवसत्रयम् ।
प्रयाणदिवसे त्याज्यं मधुतैलं जिगीषुणा ॥ १०६ ॥

जिगीषुणा जेतुमिच्छुना राज्ञा यात्रादिनात्पूर्वं पञ्चदिनं क्षौरं त्याज्यम् । क्षीरं तु दिनत्रयं त्याज्यम् । न पातव्यमित्यर्थः । मधु तैलं च प्रयाणदिवसे त्याज्यम् । मधु न भक्ष्यं तैलं न स्नापनीयमित्यर्थः ॥

भुक्त्वा तैलं गुडं क्षीरं मांसं गच्छन् स रोगभाक् ।
अवमान्य स्त्रियं मान्यं विप्रं मृत्युमवाप्नुयात् ॥ १०७ ॥

प्रयाणसमये तैलं तैलपक्वं गुडं क्षारं मांसं वा भुक्त्वा यो गच्छति स रोगभाग्भवति । स्त्रियं मान्यं पुरुषं ब्राह्मणं वाऽपमान्य एतेषामपमानं धिक्कारादिना कृत्वा गच्छन् मृत्युं प्राप्नुयात् ॥

अथ यात्रानिवृत्तौ गृहप्रवेशमुहूर्तमाह—

प्रवेशस्तत्परावृत्तावुत्तमो मैत्रभध्रुवे ।
चरक्षिप्रे मध्यमोऽमिद्वीशतीक्ष्णोग्रभेऽधमः ॥ १०८ ॥

तत्परावृत्तौ तस्या यात्रायाः परावृत्तौ सत्या प्रवेशो मैत्रभध्रुवे मृगवती चित्रानुराधा रोहिण्युत्तरात्रये उत्तरः । चरक्षिप्रे स्वातीपुनर्वसुश्रवणत्रय हस्ताश्विपुष्येषु प्रवेशो मध्यमः । शेषेष्वधम इत्यर्थः । लग्नादिविचारस्तु वास्तुप्रकरणस्थगृहप्रवेशे वक्ष्यमाणो ग्राह्यः ॥

प्राच्यां गजं दक्षिणस्यां रथं पश्चात्तुरङ्गमम् ।
उत्तरस्यां तु शिबिकामारुह्य व्रजतां जयः ॥ १०९ ॥

स्पष्टम् ॥

अथ गमनसमये विधिमाह—

* उद्धृत्य दक्षिणाङ्घ्रिं द्वात्रिंशत्पदमितां महीं गत्वा ।
तिलघृतसुवर्णपात्रं दत्वा विप्राय यानमारोहेत् ॥ ११० ॥

गन्ता राजा गमनसमये प्रथमतो दक्षिणाङ्घ्रिमुद्धृत्य गृहाद्बहिर्द्वा-

त्रिंशत्पदमितां भूमिं गत्वा मौहूर्तिकाय विप्राय तिलघृतसुवर्णसहित पात्रं दत्वा गजादियानमारोहेत् ॥

अथावश्यककार्यादिना गमनस्य विलम्बे सति तस्मिन्सुमुहूर्ते स्थलान्तरे वस्तुविशेषस्थापनमाह—

**यज्ञोपवीतं विप्रेण शस्त्रं क्षत्रेण मासिकम् ।**
**वैश्येन शूद्रेण फलं प्रस्थाप्यं वा स्थलान्तरे ॥ १११ ॥**

क्षत्रेण क्षत्रियेण शस्त्रं प्रस्थापनीयम् । अभीष्टं वस्तु वा प्रस्थापयेत् । तदाह वसिष्ठः—"श्वेतातपत्रध्वजचामराश्वविभूषणोष्णीषगजाम्बराणि । आन्दोलिकाछत्रमथाश्ववाराञ्छय्यासनाद्यं मनसस्त्वभीष्टम् ॥" इति ॥

**राजा दशाहं सामन्तः सप्ताहमितरो जनः ।**
**पञ्चाहमेकत्र वसेत्प्रस्थितो न कदाचन ॥ ११२ ॥**

राजा भूमिपालः प्रस्थितः कृतप्रस्थानो दशदिनं एकत्र न वसेत् । सामन्तो मण्डलाधिपः प्रस्थितो न सप्ताहमेकत्र वसेत् । तदितरो जनो ब्राह्मणादिः ॥

अथ प्रस्थाने दिग्विशेषेण दिननियममाह—

**सप्त पञ्च गुण नेत्र सम्मिता-**
**न्वासरान् हरिदिगादिषु क्रमात् ।**
**प्रस्थितोऽपि निवसन्वसुन्धरा-**
**धीश्वरो जयति वैरिवाहिनीम् ॥ ११३ ॥**

हरिदिगादिषु प्राच्यादिदिक्षु क्रमेण यथा—पूर्वस्यां प्रस्थितः सप्त दिनानि दक्षिणस्यां पञ्च प्रतीच्यां त्रीणि उत्तरस्यां द्वे दिने निवसन् राजा शत्रुसेनां जयति ॥

अथ प्राचां मतभेदेन प्रस्थानपरिमाणमाह—

**गेहाद्गेहान्तरं गर्गः सीम्नः सीमान्तरं भृगुः ।**
**बाणक्षेपं भरद्वाजो वसिष्ठस्तु पुराद्बहिः ॥ ११४ ॥**

स्वगृहाद्गेहान्तरं परगृहमतिसमीपवर्त्यपि तत्प्रस्थानावधिभूतमाह गर्ग इत्यर्थः अथ वा स्वग्रामसीमानमुल्लङ्घ्य सीमान्तरं ग्रामान्तरसीमां प्रस्थानावधिमाह भृगुः । अथ योध्रा स्वबलेन क्षिप्यमाणो बाणो यावद्दूरं गच्छति तावन्मात्रं प्रस्थानं स्यादिति भरद्वाजः कथयति । वसिष्ठस्तु स्वनगराद्बहिर्गमनं प्रस्थानमाहेत्यर्थः ॥

**धनुःपञ्चशतीं केचिद्यात्रां तद्द्विशतीं परे ।**
**अन्ये पुराद्गृहाद्वा तद्दशकं गम्यदिङ्मुखम् ॥ ११५ ॥**

केचिद्धनुषां पञ्चशतीं यात्रां वदन्ति । चतुः करमितं धनुः । परे तेषां धनुषां द्विशतीं शतद्वयं तावन्मितं गमनप्रस्थानमित्याहुरित्यर्थः । अन्ये तु स्वपुरात्स्वगृहाद्वा तेषां धनुषां दशकं प्राहुः । एतत्प्रस्थानं गम्यदिङ्मुखं गन्तव्यदिगभि मुखं कार्यम् । यस्यां दिशि गमनं चिकीर्षितं तस्यां दिश्यामिमुख्येन प्रस्थानं कर्तव्यमित्यर्थः ॥

**स्त्रीसङ्गं सप्तरात्रं प्राग्यात्राहात्परिवर्जयेत् ।**
**यात्रा दिने तु रोगार्तः सन्निवर्तेत वा न वा ॥ ११६ ॥**

यात्रादिनात्पूर्वं सप्तरात्रपर्यन्तं स्त्रीसङ्गं परिवर्जयेत् । अत्यन्तकामवशात्स्त्रीसङ्गं त्यक्तुमशक्तो यात्रादिने वा त्यजेत् । यात्रादिने तु स्त्रीसङ्गमाचरन् रोगार्तस्सन् देशान्तरान्निवर्तेत न वा निवर्तेत किन्तु म्रियेतेत्यर्थः ॥

अथ नक्षत्रादीनां दोहदमाह सप्तभिः—

**कुल्माषाँस्तण्डुलतिलान्माषान्दधि घृतं पयः ।**
**मृगमांसं मृगास्रक पायसं चापकं मृगम् ॥ ११७ ॥**

तृतीयश्लोकान्ते हयादिति वर्तते । तत्र हयादश्विनीमारभ्यैतान्पदार्थान् क्रमेण तत्तन्नक्षत्रदोहदरूपाञ्जानीयादिति शेषः । यथा—अश्विन्यां कु-

ल्मापान् धान्यविशेषान् । भरण्यां तण्डुलयुक्ततिलान् । कृत्तिकायां माषान् । रोहिण्यां दधि । मृगे घृतम् । आर्द्रायां क्षीरम् । पुनर्वसौ मृगमांसम् । पुष्ये मृगरुधिरम् । आश्लेषायां पायसम् । मघायां चापकः पक्षिविशेषस्तन्मांसम् । पूर्वाफल्गुन्यां मृगमांसम् ॥

**शशमांसं षष्टिकान्नं प्रियङ्गुकमपूपकम् ।**
**चित्राण्डजं फलं कौर्मं सारीं गोधां च शल्यकीम्॥११८॥**

उत्तराफल्गुन्यां शशमांसम् । हस्ते षष्टिको धान्यभेदस्तदन्नम् । चित्रायां प्रियङ्गुकम् । स्वात्यामपूपम् । विशाखायां चित्राण्डजं विचित्रपक्षिमांसम् । अनुराधायां फलमाम्रादिकम् । ज्येष्ठायां कूर्ममांसम् । मूले सारिकाख्यपक्षिमांसम् । पूर्वाषाढायां गोधामांसम् । उत्तराषाढायां शल्यकीमांसम् ॥

**हविष्यं कृसरान्नं च मुद्गान्नं यवपिष्टकम् ।**
**मत्स्यान्नं चित्रितान्नं च दध्यन्नं दोहदं हयात् ॥ ११९ ॥**

अभिजिति हविष्यं मुद्गादि । श्रवणे कृसरान्नं तिलौदनम् । धनिष्ठायां मुद्गौदनम् । शततारायां यवानां पिष्टकम् । पूर्वाभाद्रपदायां मत्स्यमिश्रमोदनम् । उत्तराभाद्रपदायां चित्रवर्णमन्नम् । रेवत्यां दध्योदनं दोहदं जानीयात् ॥

**रसालां पायसं काञ्जीं शृतदुग्धं तथा दधि ।**
**दुग्धं तैलोदनं भक्ष्यं रवितो वारदोहदम् ॥ १२० ॥**

रवितो रविवारमारभ्य एतद्वारदोहदं भक्ष्यं भोक्तुं योग्यं जानीयात् । यथा—रवौ रसालां दधिशर्करादिभिः संसृष्टां शिखरिणीति देशभाषया प्रसिद्धाम् । सोमवारे पायसम् । भौमे काञ्जीम् । बुधे तप्तक्षीरम् । गुरुवारे दधि । शुक्रे दुग्धम् । शनौ तिलौदनम् ॥

अथ तिथिदोहदमाह—

**अर्कपत्रं तण्डुलाम्बु घृतं श्राणा हविष्यकम् ।**
**स्वर्णाम्बपूपरुचकमम्बु गोमूत्रितं यवाः ॥ १२१ ॥**

प्रतिपदादितिथिषु क्रमेणैतत्तिथिदोहदं ज्ञेयम् । यथा—प्रतिपदर्कपत्रं वृक्षविशेषस्य दलम् । द्वितीयायां प्रक्षालितनण्डुलजलम् । तृतीयायां घृतम् । चतुर्थ्यां यवागूः । पञ्चम्यां मुद्गादिहविष्यम् । षष्ठ्यां प्रक्षालितस्वर्णजलम् । सप्तम्यामपूपम् । अष्टम्यां बीजपूरफलम् । नवम्यां जलम् । दशम्यां गोमूत्रम् । एकादश्यां यवाः ॥

**पायसं गुडमस्त्रं च मुद्गान्नं तिथिदोहदम् ।**
**घृतं तिलान्नं मत्स्यश्च दुग्धं प्राच्यादिदोहदम् ॥ १२२ ॥**

द्वादश्यां परमान्नम् । त्रयोदश्यां गुडम् । चतुर्दश्यां रक्तम् । पञ्चदश्यां मुद्गौदनम् । अथ दिग्दोहदमाह घृतमिति—प्राच्यां घृतम् । दक्षिणस्यां तिलान्नम् । प्रतीच्यां मत्स्यः । उत्तरस्यां क्षीरम् ॥

नन्वेतद्दोहदं किं कार्यमित्यत्राह—

**भक्ष्यमभक्ष्यं लभ्यमलभ्यं यद्दिग्वासरतिथिऋक्षाणाम् ।**
**भुक्त्वा स्पृष्ट्वा दृष्ट्वा दत्वा गच्छेद्दोहदमुक्तम् ॥ १२३ ॥**

दिग्वासरादिदोषे सति तद्दिग्वासरतिथिनक्षत्राणां उक्तं दोहदं तद्भक्ष्यं यदि तत्रापि भक्ष्यं भोक्तुं योग्यं चेत् दधिदुग्धादिकं तद्भुक्त्वा यदभक्ष्यं तत्स्पृष्ट्वा वा दृष्ट्वा वा दत्वा वा यदलभ्यं तत्स्मृत्वा वा गच्छेत् । ननु दुष्टनक्षत्रादिषु दोहदभक्षणादिना दोषापाकरणं युक्तं विहितनक्षत्रादिषु तत्कथनं व्यर्थमिति चेन्न । आवश्यकगमने महादोषाणामपि परिघदण्डवारशूलयोगिन्यादीनामपाकरणाय दोहदोक्तेः सार्थक्यात् ॥

**कविकण्ठीरवश्चक्रे ज्योतिर्वित्सरसात्मजः ।**
**यात्राशास्त्रमुहूर्तानां रघुनाथो निरूपणम् ॥ १२४ ॥**

यात्राशास्त्रसम्बन्धिमुहूर्तानां निरूपणं चक्रे कृतवान् ॥

इति सुखठाणकरोपाह्वभट्टरामचन्द्रसुतश्रीमन्महेश्वरभट्टविरचितायां मुहूर्तमालायाटीकायां सौन्दर्यबोधिन्यां यात्राप्रकरणं समाप्तमष्टमम् ॥

## वास्तुप्रकरणम् ९

अथ वास्तुप्रकरणं व्याख्यायते ॥ तत्रादौ गृहनिर्माणस्य प्रयोजनं कथयंस्तत्प्रकरणं प्रतिजानीते—

**गृहस्थस्य क्रियाः सर्वाः स्वसत्ताकं गृहं विना ।**
**न सिद्ध्यन्ति यतस्तस्माद्गृहप्रकरणं ब्रुवे ॥ १ ॥**

स्वस्य सत्ता यत्र तत्स्वसत्ताकं स्वकीयमित्यर्थः । शेषं स्पष्टम् ॥

अथ यत्र नगरे गृहनिर्माणमिष्यते तत्र स्वस्य शुभाशुभविचारं तावदाह —

**स्वनामराशेः पुरनामराशि-**
**र्द्व्यङ्केशदिक्पञ्चमितो हिताय ।**
**स्यान्निर्बलेऽर्कोडुपभार्गवेज्ये**
**क्रमात्स्वयोषित्सुखवित्तहानिः ॥ २ ॥**

अत्र पुरशब्दो ग्रामस्याप्युपलक्षणम् । स्वनामराशेः स्वस्य व्यावहारिकनामराशितः पुरस्य नामराशिर्द्वितीयो नवम एकादशो दशमः पञ्चमो वा स्यात्तर्हि तत्पुरं हिताय स्यात् । यथा—चूडामणिसंज्ञकद्विजनामराशेर्मेषाद्वाराणसीपुरराशिर्नवमो द्वितीयो भवति तनस्तन्नगरं तस्य वासयोग्यम् । यथा वा—नीलकण्ठनामराशेर्वृश्चिकाद्वरणादिसंज्ञकग्रामराशिर्मीनाख्यः पञ्चमोऽतश्चरणादिर्नीलकण्ठस्य हिताय स्यात् । अथ गृहारम्भे सूर्यादीनां दौर्बल्यं निषेधति—स्यादिति । अर्के निर्बले सति गृहारम्भे स्वस्य हानिः स्यात् । उडुपश्चन्द्रस्तस्मिन्निर्बले स्त्रीहानिः । भार्गवे निर्बले सुखहानिः । गुरौ निर्बले वित्तहानिः । एषां निर्बलत्वं गोचरवशाद्राहित्यं नीचस्थानादिगतत्वं च ॥

अथ ग्रामानामनोरुत्तमर्णाधमर्णत्वमाह—

**द्विघ्नः स्ववर्गः पुरवर्गयुक्त-**
**स्त्वष्टोऽष्टभिर्व्यत्ययतश्च शेषम् ।**

यस्याधिकः सोऽत्र ऋणीति मैत्री
सेवा विवाहेष्वपि काकिणीयम् ॥ ३ ॥

वर्गा अकचटतपयशाख्याः 'तार्क्ष्योतुसिंह' इत्यादिना विवाहप्रकरणे प्रागुक्तास्तत्र स्ववर्गः स्वस्य गृहस्वामिनो वर्गो गरुडादिर्यत्सङ्ख्याको भवति स द्विघ्नः । तत्सङ्ख्या द्विगुणा कार्येत्यर्थः । ततः पुरवर्गयुक्तः पुरवर्गस्य सङ्ख्यया युक्तः कार्यः । ततोऽष्टभिस्तष्टोऽवशेषितः कार्यः। एवं व्यत्ययतश्च पुरवर्गसङ्ख्यां द्विगुणां स्ववर्गसङ्ख्यया युक्तां च कृत्वाऽष्टभिर्भजेदित्यर्थः । एवमुभयथा यच्छेषमियं काकिणी ज्ञेया । यस्य शेषमधिकं सोत्र ऋणी स्यात् । इतरस्तु धनी ज्ञेयः । यथा—नीलकण्ठस्य वर्गः सर्पः तत्सङ्ख्या ५ द्विगुणा १० चरणाद्रेर्वर्गः सिंहस्तत्सङ्ख्यया ३ युक्ता १३ अष्टभिस्तष्टा शेषं नीलकण्ठस्य काकिण्यः ५ एवं ग्रामवर्गसङ्ख्या ३ द्विघ्ना ६ नीलकण्ठवर्गसङ्ख्यया ५ युक्ता ११ अष्टभिस्तष्टा शेषं ३ ग्रामस्य काकिण्यः । अत्र नीलकण्ठस्य शेषमधिकमतः स ऋणी । अत एवास्य द्रव्यहानिरित्यर्थः । उक्तं च—"स्ववर्गं द्विगुणीकृत्य परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योऽधिकः स ऋणी भवेत् ॥" इति । इयं काकिणी मैत्र्यां सेवायां विवाहे च चिन्तनीया । यस्तु ऋणी स्यात्तस्य हानिरितरस्य तु लाभ इत्यर्थः ॥

अथ म्वराद्रिविरात्पुरनिवासे निषिद्धस्थानान्याह—

पुरस्य मध्ये वृषयुग्मसिंह-
नक्रं वसेन्नैव ततः क्रमेण ।
न पूर्वतो वृश्चिकमीनकन्या-
कर्काश्च जूकाजघटा वसेयुः ॥ ४ ॥

तदनुमिष्टस्य पुरस्य प्रकीर्णप्रकरणोक्तवत्त्रिभागवन्नवधा विभागं कृत्वा मध्ये मध्यभागे वृषयुग्मसिंहनक्रं नैव वसेत् । वृषमिथुनसिंहमकरराशिमन्तः पुरुषा न वसेयुरित्यर्थः । ततः पूर्वतः पूर्वादिदिक्षु क्रमेण वृश्चिकादिराशिमन्तः पुरुषा न वसेयुः । यथा—पूर्वस्यां वृश्चिकराशि-

मान् । आग्नेय्यां मीनः । दक्षिणस्यां कन्या । नैर्ऋत्यां कर्कः । प्रतीच्यां धनुः । वायव्यां तुला । उत्तरस्यां मेषः । ऐशान्यां कुम्भः ॥

**अवर्गाद्याः क्रमाद्वर्गाः पूर्वादिषु बलान्विताः ।**
**तेन तत्पञ्चमदिशि वासो द्वारं च नोचितम् ॥ ५ ॥**

अकचटतपयशवर्गाः पूर्वादिषु क्रमाद्बलान्विताः । यथा पूर्वस्यामवर्गः आग्नेय्यां कवर्ग इत्यादि । तेन हेतुना तच्छत्रुभूतस्य पञ्चमवर्गस्य दिशि वासो द्वारं वा नोचितम् । यथा—नीलकण्ठस्य तवर्गः पश्चिमायां बलान्वितोऽतः पञ्चमदिशि पूर्वस्यां द्वारं वासो वा नोचितः ॥

अथ गृहादीनां नक्षत्रकल्पनामाह—

**विवाहवत्स्वव्यवहारनाम्न-**
**स्तदिष्टभं येन भकूटशुद्धिः ।**
**कल्प्यं गृहद्वारपुरादिकानां**
**विनिर्मितौ बुद्धिमता विचिन्त्य ॥ ६ ॥**

स्वव्यवहारनाम्नः स्वकीयव्यावहारिकनामनक्षत्रस्य विवाहवत् विवाहप्रकरणोक्तरीत्या येन नक्षत्रेण सह भकूटशुद्धिः राशिकूटादिशुद्धिर्भवेत्तत् तन्नक्षत्रं बुद्धिमता विचिन्त्य गृहादीनां विनिर्मितौ कल्पनीयम् । यथा—नीलकण्ठस्य नामनक्षत्रमनुराधाख्यं तस्य रोहिण्या सह भकूटशुद्धिः सम्भवतीति कल्पितमिष्टनक्षत्रं रोहिणी ॥

अथेष्टायकल्पनार्थं क्रमादायानाह—

**ध्वजधूमसिंहकुकुरवृषखरगजवायसा अष्टौ ।**
**आयास्तेषां विषमः श्रेष्ठस्तं कल्पयेदिष्टम् ॥ ७ ॥**

कुकुरः श्वा । खरो गर्दभः । शेषाः प्रसिद्धाः । तेषामष्टानां मध्ये ध्वजसिंहादिर्विषम आयः श्रेष्ठः । अतो वास्तुनिर्माणे विषमेषु कंचिदिष्टमायं कल्पयेत् ॥

अथेष्टायनक्षत्राभ्यामिष्टभूमेर्विस्तारादिसाधनार्थं क्षेत्रफलमाह—

> व्येकेष्टभघ्ना यमपञ्चचन्द्रा-
> श्चन्द्रोनितेष्टायहतैः कुनागैः ।
> युताः सहात्यष्टिभिरष्टिचक्षु-
> स्तष्टा भवेत्क्षेत्रफलं तदिष्टम् ॥ ८ ॥

यमपञ्चचन्द्राः १९२ व्येकेष्टभघ्नाः एकोनितेष्टनक्षत्रेण गुणिताः कार्याः चन्द्रोनिताष्टा येन एकरहितेष्टायसङ्ख्यया हतैः कुनागैः ८१ युताः कार्याः । ते चात्यष्टिभिः सप्तदशभिः सह संयुता इत्यर्थः । ततोऽष्टिचक्षुर्भिः २१६ तष्टा अवशेषिता इष्टं क्षेत्रफलं तत्स्यात् । यथा—इष्टभं रोहिणी तत्सङ्ख्या ४ इष्टभं व्येकं ३ अनेन यमबाणचन्द्राः १९२ गुणिताः ५७६ इष्टायः सिंहः कल्पितः तत्सङ्ख्या ३ चन्द्रोनित इष्टायः २ अनेन कुनागैः ८१ हतैः १६२ युताः ७३८ अत्यष्टिभिः १७ युताः ७५५ अष्टिचक्षुर्भिः २१६ भक्ताः शेषं २०३ इदं क्षेत्रफलं ज्ञेयम् ॥

अथ क्षेत्रफलाद्गृहस्य दैर्घ्यादिसाधनमाह—

> फलं विस्तृतिहृद्दैर्घ्यं दैर्घ्यहृद्विस्तृतिः फलम् ।
> फलं तदष्टभिस्तष्टमिष्टायः स्याद्ध्वजादिकः ॥ ९ ॥

फलं क्षेत्रफलं विस्तृतिहृत् इष्टविस्तारेण भक्तं गृहस्य दैर्घ्यं स्यात् । तथा दैर्घ्यहृत् इष्टदैर्घ्येण भक्तं फलं विस्तारः स्यात् । यथा—गृहस्वामिहस्तेन कल्पितविस्तारः ७ अनेन फले २०३ भक्ते २९ इदं दैर्घ्यम् । अथवा कल्पितदैर्घ्येण २९ भक्ते फले विस्तृतिरियम् ७॥ अथ कल्पितायसाधनमाह—फलमिति । तत्फलमष्टभिरवशेषितं ध्वजादिः कल्पित आयः स्यात् । यथा फलं २०३ अष्टभिर्भक्तं शेषं ३ अयं कल्पित आयः सिंहः । कल्पितनक्षत्रसाधनं तु फलमष्टगुणं कृत्वा सप्तविंशत्या तष्टं कार्यम् । यथा—फलं २०३ अष्टगुणं १६२४ सप्तविंशत्या तष्टं ४ इदं कल्पितनक्षत्रमागतं ज्ञेयम् । तत्रैव महावास्तुनिर्माणमपेक्षितं चेत्षोडश-

धिकद्विशत्या हतेन इष्टाङ्केन क्षेत्रफलं युक्तं कार्यम् । यथा—इष्टाङ्कः २ षोडशाधिकद्विशत्या २१६ हतः ४३२ अनेन फलं २०२ युक्तं कृतं ६३९ अतो दैर्घ्यादिकं साध्यम् ॥

> प्रकल्पितैर्विस्तृतिदैर्घ्यहस्तै-
> र्यदायशुद्धं न फलं गृहस्य ।
> युक्तं प्रकुर्यादथवा वियुक्त-
> मभीप्सितायेन फलं स्फुटं स्यात् ॥ १० ॥

अभीष्टैर्विस्तृतिदैर्घ्ययोर्हस्तैर्यदि कदाचिदभीष्टायशुद्धं गृहस्य फलं न स्यात् तर्हि अभीष्टायेन तत्फलं युक्तं वियुक्तं वा कुर्यात् । तेन फलं स्फुटं स्यात् । तस्मादिष्टविस्तारादिना दैर्घ्यादिकं साध्यम् । अथवाभीष्टहस्तात्मकदैर्घ्यविस्तारहतिः क्षेत्रफलं तदष्टभिरवशेषित ध्वजादिरायः स्यात् । इष्टायसिद्धौ फलान्नक्षत्रं च प्रसाध्य तेन स्वनामनक्षत्रस्य राशिकूटादिघटितं विचार्य प्रशस्तं चेत्तद्दैर्घ्यादिकमङ्गीकार्यम् ॥

> ध्वजे द्वारं सर्वदिक्षु सिंहे पूर्वयमोत्तरे ।
> वृषे प्राच्यां गजे प्राचीयाम्ययोः स्यात्सुखप्रदम् ॥ ११ ॥

ध्वजाख्ये आये सर्वदिक्षु दिक्चतुष्टयेऽपि द्वारं सुखप्रदं स्यात् । सिंहाख्ये आये पूर्वदक्षिणोत्तरदिक्षु द्वारं कार्यम् । न तु प्रतीच्याम् । वृषाये पूर्वस्यां द्वारम् । गजाये पूर्वदक्षिणदिशोः ॥

> कैश्चित्पश्चादुदक्पूर्वदक्षिणस्यां द्विजादितः ।
> द्विजविट्शूद्रराजन्यभद्वारं पूर्वतः परैः ॥ १२ ॥

द्विजादितो ब्राह्मणादिवर्णक्रमेण पश्चिमादिमुखं गृहं कैश्चिदुक्तम् । यथा—द्विजराशीनां कर्कवृश्चिकमीनराशिमतां पुंसां पूर्वदिशि एवं वैश्यराशीनां दक्षिणदिशि । शूद्रराशीनां पश्चिमदिशि राजन्यभानामुत्तरदिशि ॥

**अग्निमित्रातिपितृवसोः सप्तस्विन्दौ तयेऽष्टभे ।**
**न कर्तव्ये क्रमाद्द्वारे प्राक्परे दक्षिणोत्तरे ॥ १३ ॥**

अग्निः कृत्तिका मित्रमनुराधा तस्मात्सप्तसु कृत्तिकादिसप्तनक्षत्रेषु अनुराधादिसप्तनक्षत्रेषु वा इन्दौ चन्द्रे सति तयेष्टभे गृहस्य दैर्घ्यविस्तारवशादुत्पन्नेष्टनक्षत्रे तेषु स्थिते सति प्राक्परे द्वारे न कर्तव्ये पूर्वद्वारं पश्चिमद्वारं च न कर्तव्यम् । तथा पितृवसोः सप्तसु मघादिसप्तसु धनिष्ठादिसप्तसु च चन्द्रनक्षत्रे इष्टनक्षत्रे वा सति दक्षिणद्वारमुत्तरद्वारं च न कार्यमित्यर्थः । तत्र हि चन्द्रो गृहनक्षत्रं च पुरः पृष्ठस्थितं भवति तन्निषिद्धम् ॥

**शालाध्रुवाङ्काः पूर्वादिद्वाःसु कुद्वियुगाष्टयः ।**
**सैकाङ्कयोगसङ्ख्याकं गृहनाम ध्रुवादिकम् ॥ १४ ॥**

पूर्वादिद्वारेषु एते क्रमाच्छालाध्रुवाङ्काः । यथा—पूर्वस्यां द्वारे चिकीर्षिते शालाध्रुवाङ्क एकः । दक्षिणस्यां द्वौ । पश्चिमायां चत्वारः । उत्तरस्यामष्टौ । अथ सैक एकयुतः योऽङ्कयोगः दिक्परत्वेन यावन्ति द्वाराणि चिकीर्षितानि एकं द्वे त्रीणि चत्वारि वा तावतां शालाध्रुवाङ्कानां योगः तत्सङ्ख्याकं ध्रुवादिकं गृहनाम स्यात् । यथा पूर्वस्यां पश्चिमायां च द्वारे चिकीर्षिते तत्र शालाध्रुवौ १।४ अनयोर्योगः ५ सैकः ६ षष्ठं गृहनाम जातं कान्तमिति । एवं पूर्वदक्षिणोत्तरदिक्षु शालाध्रुवाणां १।२।८ योगः ११ सैकः १२ धनदाख्यं गृहं जातम् । दिक्चतुष्टये तु विजयाख्यं षोडशं भवति ॥

ध्रुवादिसंज्ञा आह सार्धेन—

**ध्रुवं धन्यं जयं नन्दं खरं कान्तं मनोरमम् ।**
**सुमुखं दुर्मुखं क्रूरं विपक्षं धनदं क्षयम् ॥ १५ ॥**
**आक्रन्दं विपुलाख्यं च विजयं चेति षोडश ।**

एताः षोडशान्वर्थसंज्ञाः ॥

अथायवशाद्ध्रुवादिसंज्ञकं गृहमाह—

**चतुर्गुणक्षेत्रफलमष्टितष्टं ध्रुवादिकम् ॥ १६ ॥**

चतुरिति । चतुर्भिर्गुणितं क्षेत्रफलं षोडशभिरवशेषितं ध्रुवादिकं स्यात् ॥

अथैवं शालाध्रुवाङ्कयोगादुत्पन्नगृहसंज्ञा अनायासेन ज्ञातुं स्फुटमाह चतुर्भिः—

**ध्रुवाख्यमूर्ध्वद्वारं स्याद्धन्यं प्राग्द्वारमालयम् ।**
**जयाख्यं दक्षिणद्वारं नन्दं प्राग्दक्षिणामुखम् ॥ १७ ॥**
**खराख्यं पश्चिमद्वारं कान्तं प्राक्पश्चिमामुखम् ।**
**मनोरममवाक्पश्चात्सुमुखं प्रागपाक्परम् ॥ १८ ॥**
**दुर्मुखाख्यमुदग्द्वारं क्रूरं स्यात्प्रागुदङ्मुखम् ।**
**विपक्षं दक्षिणोदग्यद्धनदं प्रागपागुदक् ॥ १९ ॥**
**क्षयं प्रतीच्युदग्द्वारमाक्रन्दं प्राक्परोत्तरम् ।**
**विपुलं स्याद्विनापूर्वां विजयं सर्वदिङ्मुखम् ॥ २० ॥**

यदूर्ध्वद्वारं तद्ध्रुवाख्यं गृहं प्रथमम् । एवं पूर्वद्वारं गृहं धन्यं द्वितीयम् । प्राग्दक्षिणयोर्मुखे द्वारे यस्य तत् । अवाक्पश्चात् दक्षिणपश्चिममुख मनोरमाख्यम् । प्रागपाक्परं पूर्वदक्षिणपश्चिममुखं सुमुखसंज्ञम् । यद्दक्षिणोदक् दक्षिणोत्तरमुखं तद्विपक्षम् । पूर्वां विना दक्षिणपश्चिमोत्तरद्वारमित्यर्थः । सर्वदिङ्मुखं चतुर्दिग्द्वारम् ॥

अथ व्ययादिकमाह—

**व्ययोऽष्टतष्टमिष्टर्क्षं नेष्टः स्यादायतोऽधिकः ।**
**गेहे गेहेशयोरेकपृक्षं चेत्कुरुते क्षयम् ॥ २१ ॥**

येन सह स्वनामनक्षत्रस्य घटितं विचारितं गृहविस्तारादिवशादुत्पन्नं तदिष्टनक्षत्रं अष्टभिस्तष्टं व्ययः स्यात् । स चेदिष्टायादधिकस्तदा नेष्टः । यथा—रोहिणीभम् । अयं व्ययः ४ इष्टायात्सिंहादधिकोऽनो

नेष्टः । गेहस्य गृहस्वामिनश्च नक्षत्रमेकमेव चेत्क्षयं गृहस्वामिनाशं कुरुते । यत्प्रागुक्तमिष्टर्क्षं तदेवेह गेहनक्षत्रं ज्ञेयम् ॥

व्ययान्वितं क्षेत्रफलं समेतं
 ध्रुवादिनामाक्षरसङ्ख्यया च ।
तष्टं त्रिभिः शक्रकृतान्तराजः
 स्युरंशकास्तत्र न सन्कृतान्तः ॥ २२ ॥

प्रागुक्त क्षेत्रफलं व्ययेन युक्तं ध्रुवादिनामाक्षरसङ्ख्यया च समेतं युक्त त्रिभिरवशेषित कार्यम् । एकद्वित्रिशेषे क्रमेण शक्रश्च कृतान्तश्च राट् च शक्रकृतान्तराजः इन्द्रयमभराजसंज्ञकास्त्रयोंशाः स्युः । तत्र कृतान्तसंज्ञकोंशो न सन् प्रशस्तो न स्यात् । यथा—क्षेत्रफलं २०३ व्ययान्वितं २०७ कान्तगृहस्य नामाक्षरसङ्ख्यया २ समेतम् २०९ त्रिभिस्तष्टं शेषम् २ अथ कृतान्तो नेष्टः । अथ धनदगृहाक्षरैः समेतं २१० त्रिभिस्तष्टं ३ राजसंज्ञोऽयमंशः शुभः ॥

अथ केषाञ्चिन्मतेन गृहस्यायुरादिनवकमाह पञ्चभिः—

नागनवाद्रिनवाद्रियुगाङ्कव्यष्टहतं नवधा फलमिष्टम् ।
खार्कगजेस्तिथिसप्तभभाङ्करष्टभिरूणकरैरथ तष्टम् ॥ २३ ॥

नवधा स्थापितमिष्टफलं क्षेत्रफलं क्रमान्नागादिभिरङ्कैर्गुणितं क्रमात्खार्कादिभिस्तष्टं सत् गृहस्य आयुरादिक्रमेण सिद्ध्यति । यथा—इदं क्षेत्रफलं २०३ नागैः ८ गुणितं १६२४ ख्यार्कैः १२० भक्तं शेषम् ६४ इदं गृहस्यायु. । एवं नवभिर्हतं गजैस्तष्टमायः ३ सिंहायो जातः । अद्र्योऽष्टौ तैर्हतं तिथिभिः १५ तष्टम् ४ तिथिश्चतुर्थी । नवभिर्हतं सप्तभिस्तष्टम् ७ वारः शनिः । अष्टभिर्हतं सप्तविंशत्या तष्टम् ४ नक्षत्रं रोहिणी । चतुर्भिर्हतं भैः २७ तष्टम् २ योगः प्रीतिनामा । अङ्कैः ६ हतं अङ्कैर्भक्तं शेषम् ९ नवांशोऽयम् । एवं त्रिभि·

हृतमष्टभिस्तष्टं १ ऋणमिदम् । अष्टभिर्हतं द्वादशभिस्तष्टम् ४ इदं धनम् ॥

तदेव क्रमेण निर्दिशति—

**आयुरायस्तिथिर्वारो भं योगोंऽशऋणं धनम् ।**
**आयुर्गृहस्याय ओजस्तिथी रिक्तामर्मां विना ॥ २४ ॥**

आयुर्वर्षात्मिका स्थितिः । आयो ध्वजादिः । तिथिः प्रतिपदादिः । एवं ज्ञेयम् । अथात्र शुभानाह—आयुर्गृहेति । गृहस्येति प्रत्येकं सम्बध्यते । गृहस्य यथा यथाधिकमायुः श्रेष्ठम् । अत्राधिकपदमध्याहार्यम् । आयो ध्वजसिंहादिरोजो विषमः श्रेष्ठः । तिथिस्तु रिक्तामारहिता श्रेष्ठा ॥

**सूर्यारवारौ तद्वांशौ विना वारोऽथ तारका ।**
**विपदादिं विना योगो दुष्टयोगान्विनांशकः ॥ २५ ॥**

सूर्यभौमवारौ विना तद्वांशौ च विना वारः श्रेष्ठः । यदि क्षेत्रफलात्सूर्यवारोऽथवा भौमवार आगतस्तर्हि तं वारं तद्भं तदंशं च वर्जयेदित्यर्थः । तत्र सूर्यवारस्य राशिः सिंहः स च सिंहनवांशश्च लग्ने निषिद्धः । एवं भौमवारश्चेत्तद्राशी मेषवृश्चिकौ तदंशौ च लग्ने निषिद्धाविति ज्ञेयम् । अथ तारका विपदादिं विना श्रेष्ठा । आदिशब्दात्प्रत्यरिनिधनतारे ग्राह्ये । अयमर्थः—गृहस्वामिनक्षत्राद्गृहभं गणयित्वा नवभिस्तष्टं कार्यम् । शेषं त्रिपञ्चसप्तमितं चेत्तद्गृहमशुभम् । दुष्टयोगान्व्यतीपातादीन्विना योगः श्रेष्ठः ॥

**सन्नवांशो धनाधिक्यं श्रेष्ठं निन्द्यमृणाधिकम् ।**
**अभीष्टांशादिसिध्यर्थं प्रक्षिप्यात्राङ्गुलादिकम् ॥२६॥**

सतां शुभग्रहाणां नवांशो यत्र तादृशोंऽशकः श्रेष्ठः । अथ मृगशीर्षादिगृहनक्षत्रमागतं चेत्तद्राशिनिर्णयश्चास्मान्नवांशादेव कर्तव्यः । ऋणापेक्षया धनाधिक्यं श्रेष्ठम् । ऋणाधिक्यं तु निन्द्यम् । नन्विष्टक्षेत्रफले-

ऽभीष्टांशादिकं न सिध्यति चेत्कथमित्याशङ्क्याह—अभीष्टेति । अत्र क्षेत्रफलेऽभीष्टांशादिसिद्ध्यर्थमङ्गुलादिकं परिमाणमधिकं प्रक्षिप्य वाऽथवा विशोध्य न्यूनं कृत्वा बुधैः प्रयत्नतः क्षेत्रफलं साध्यमित्यन्वयः ॥

विशोध्य वा क्षेत्रफलं बुधैः साध्यं प्रयत्नतः ।
इत्यायुरादिनवकं सद्मनः केचिदूचिरे ॥ २७ ॥

इत्येवंप्रकारेण सद्मनो गृहस्यायुरादिनवकं केचिदाचार्या ऊचिरे उक्तवन्तः ॥

अथ गृहारम्भे मासशुद्धिं दर्शयंस्तद्वशेन द्वारनियमं चाह—

पूर्वपश्चान्मुखं कर्कसिंहनक्रघटे रवौ ।
याम्योत्तरमुखं कुर्याद्वृषमेषतुलालिगे ॥ २८ ॥

कर्कसिंहमकरकुम्भगते रवौ पूर्वमुखं पश्चिममुखं वा गृहं कार्यम् । वृषमेषतुलावृश्चिकगते रवौ दक्षिणमुखमुत्तरमुखं वा कार्यम् ॥

व्यत्ययो न शुभः शेषराशिस्थे नैव निर्मितिः ।
सहस्सहस्य राधान्त्यश्रावणेऽपि शुभं यतः ॥ २९ ॥

व्यत्ययो न शुभः वैपरीत्यमनिष्टम् । मिथुनकन्यादिशेषराशिस्थे रवौ गृहस्य निर्मितिर्निर्माणं नैव कर्तव्यम् । तत्रापि सहा मार्गशीर्षः सहस्यः पौषः राधो वैशाखः अन्त्यः फाल्गुनः श्रावणः प्रसिद्धः एतेष्वेव गृहं शुभम् ॥

यत्रैक्यं तद्दिनं ग्राह्यं विरोधे चान्द्रसौरयोः ।
केश्चिच्चैत्रेऽपि मेषेऽर्के ज्येष्ठे वृषगते शुभम् ॥ ३० ॥

यतः कारणात्सौरचान्द्रमासयोर्विरोधे सति यस्मिन्दिने तयोरुभयोरैक्यं संभवति तदेव दिनं ग्राह्यम् । अन्यथान्येषु पक्षेषु हिता इत्यर्थः । कैश्चिदाचार्यैर्मेषस्थेऽर्के चैत्रमासेऽपि वृषगतेऽर्के ज्येष्ठेऽपि शुभमुक्तम् ॥

**शुचौ कर्कगते भाद्रे सिंहेऽश्वयुजि तौलिने ।**
**त्यक्त्वा कन्यार्कमूर्जेऽपि चापार्के पौषमाघयोः ॥ ३१ ॥**

तथा कर्कगतेऽर्के शुचावाषाढेऽपि सिंहस्थेऽर्के भाद्रपदेऽपि तौलिने तुलायामर्केऽश्वयुजि आश्विनेऽपि तथा कन्यार्कमात्रं त्यक्त्वोर्जे कार्तिकेऽपि चापार्के धनुर्मासं त्यक्त्वा पौषमाघयोः शुभमुक्तम् । ननु कार्तिके कन्यार्कनिषेधो माघे चापार्कनिषेधश्च नोपपद्यते तत्र तयोः कदाप्यसम्भवादितिचेन्न । कृष्णादिमासस्य विवक्षितत्वात् । चान्द्रमासो हि द्विविधः । शुक्लादिः कृष्णादिश्च । तत्र शुक्लप्रतिपदमारभ्यामावास्यान्तः शुक्लादिः । कृष्णपक्षप्रतिपदमारभ्य पूर्णिमान्तः कृष्णादिः । उभयथापि शास्त्रे व्यवहारः । पृथ्वीचन्द्रोदये ब्राह्मे—"अश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये । तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ॥" इति शुक्लादित्वं प्रसिद्धम् । निर्णयामृते भविष्योत्तरे तु—"कार्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये । अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ॥" इत्यादि कृष्णादित्वे प्रमाणम् । अत एवाश्विनपूर्णिमामारभ्य कार्तिकपूर्णिमान्तं कार्तिकव्रतं प्रसिद्धम् । तत्र कन्यार्कस्य संभवान्निषेध उपपद्यते । एवमेव माघेऽपि धनुरर्कसम्भवान्निषेधसार्थक्यम् ॥

अथ तिथिपरत्वेन द्वारनिषेधमाह—

**पौर्णमासादितिथिषु नवषण्नवपट्सु च ।**
**गृहाणि प्रागुदक्पश्चाद्दक्षिणाभिमुखानि च ॥ ३२ ॥**

पूर्णिमाद्यष्टम्यन्तनवतिथिषु प्राङ्मुखं गृहं निषिद्धम् । एवं कृष्णनवमीमारभ्य चतुर्दश्यन्तषट्तिथिषु उदङ्मुखं न कार्यम् । अमावास्यामारभ्य शुक्लाष्टम्यन्तनवतिथिषु पश्चिममुखं न शुभम् । शुक्लनवम्यादिचतुर्दश्यन्ततिथिषु दक्षिणमुखं न कुर्यात् ॥

अथ पञ्चाङ्गशुद्धिमाह—

**न दर्शरिक्ताप्रथमाष्टमीषु नार्कारवारे न चरे विलग्ने ।**
**न दुष्टयोगे नच दुर्निमित्ते गृहं न कुर्याद्भदपञ्चकेऽपि ३३**

दर्शोऽमावास्या । रिक्ताः ४।९।१४ प्रथमा प्रतिपत् एतास्वष्टम्यां च गृहारम्भं न कुर्यात् । अर्कारसारे रविभौमवासरे न कुर्यात् । नापि चरे लग्ने मेषकर्कादौ न च दुष्टयोगे व्यतीपातादौ दुर्निमित्तमकालविद्युदादि तत्र तथा गदपञ्चके विवाहप्रकरणोक्ते रोगादिपञ्चके गृहं न कुर्यात् ॥

खलैस्त्रिषष्ठायगतैः शुभैश्च
व्ययाष्टवर्जैरथ भूमिशुद्धौ ।
मृदुध्रुवार्केज्यशतश्रविष्ठा-
स्वातीषु नव्यालयनिर्मितिः स्यात् ॥ १४ ॥

लग्नात्त्रिषष्ठायगतैः पापग्रहैः व्ययाष्टमरहितैः शुभग्रहैरुपलक्षिते लग्ने तथा खननादिना कीटास्थ्यादिराहित्येन च भूमिशुद्धौ सत्यां मृदुध्रुवहस्तपुष्यशतताराधनिष्ठास्वातीषु नव्यालयनिर्मितिर्नूतनगृहनिर्माणं शुभं स्यात् ॥

अथ वास्तुचक्रमाह—

नेष्टानि सप्त सूर्यर्क्षादिष्टान्येकादशाष्टमात् ।
दश शिष्टानि नेष्टानि चक्रे स्युर्वृषवास्तुनि ॥ ३५ ॥

सूर्यर्क्षात्सूर्याधिष्ठितनक्षत्रमारभ्य सप्त नक्षत्राणि नेष्टानि । सूर्यर्क्षादष्टमनक्षत्रमारभ्य एकादशभानि प्रशस्तानि । ततः परमवशिष्टानि दश भानि वृषवास्तुचक्रे नेष्टानि स्युः । उक्तं च—"त्रिवेदवेदाग्नियुगाग्निवेदत्रिकेषु भानोः शशिभे गृहेषु । दाहो विनाशः स्थिरता धनं श्रीः शून्यं च दारिद्र्यमृती क्रमेण ॥" इति ॥

सूतीगेहमदित्यां नैर्ऋत्यां ककुभि भूमिपालानाम् ।
इतरेषां तु विधेयं सुधिया पूर्वोक्तभेष्वेव ॥ ३६ ॥

भूमिपालानां राज्ञां सूतीगेहं सूतिकागृहं गृहस्य नैर्ऋत्यां दिशि पु-

नवैमुनक्षत्रे विधेयम् । इतरेषां नृपातिरिक्तानां सूतीगृहं तु पूर्वोक्तनक्षत्रेष्वेव सुधिया कर्तव्यम् ॥

अथ दिक्पत्वेनोपकरणगृहाण्याह—

स्नानपाकशयनास्त्रभुजीनां
धान्यकोशमरुतां गृहमैन्द्र्याः ।
तद्विदिक्षु मथनाज्यपुरीषा-
धीतिरोदनरतौषधसर्वम् ॥ ३७ ॥

ऐन्द्र्याः ऐन्द्री पूर्वा तामारभ्याष्टदिक्षु क्रमेण स्नानाद्यर्थगृहाणि कार्याणि । यथा—पूर्वस्यां स्नानगृहम् । आग्नेय्यां पाकगृहम् । दक्षिणस्यां शयनगृहम् । नैर्ऋत्यां शस्त्रगृहम् । पश्चिमायां भोजनगृहम् । वायव्यां धान्यगृहम् । उत्तरस्यां कोशो भाण्डारगृहम् । ईशान्यां मरुतो गृहं देवमन्दिरमित्यर्थः । तद्विदिक्षु तासां पूर्वादीनामष्टानां विदिक्षु मथनादीना गृहाणि कार्याणि । अत्र विदिक्शब्देन दिग्विदिशोर्मध्यभागो गृह्यते । यथा—पूर्वाग्न्योर्मध्ये मन्थनं दध्यालोडनमित्यर्थः । अग्निदक्षिणयोर्मध्ये आज्यगृहम् । दक्षिणनिर्ऋत्योर्मध्ये पुरीषं विष्ठास्थानम् । निर्ऋतिपश्चिमयोर्मध्येऽध्ययनस्थानम् । पश्चिमवायव्ययोर्मध्ये रोदनस्थानम् । वायव्योत्तरयोर्मध्ये रतं सम्भोगस्थानम् । उत्तरेशानयोर्मध्ये औषधस्थानम् । ईशानपूर्वयोर्मध्ये सर्वं पूर्वोक्तवस्तुव्यतिरिक्तसर्ववस्तूनां गृहं कार्यमित्यर्थः ॥

अथ देवालयादौ विचार्य राहुमुखमाह द्वाभ्याम्—

विदिक्ष्वीशदिशो वामं मीनार्कसिंहार्कनृपान्मृगात् ।
त्रयं त्रयं देवगृहे गृहे वेद्यां जलाशये ॥ ३८ ॥
न्यसेत्क्रमाद्रवेस्तुर्यविदिशि प्रथमं न्यसेत् ।
यस्माद्राहोर्मुखं मध्यं पुच्छमाद्यं विदिक्त्रये ॥ ३९ ॥

देवालये रवेर्मीनात्त्रयं त्रयं ईशदिशो वामं ईशानदिशः सकाशाद्वि-

लोमं विदिक्षु न्यसेत् ।-एवं मनुष्यगृहे सिंहसङ्क्रमात्रयं त्रयमीशानीतो विलोमं विदिक्षु न्यसेत् । एवं वेद्यां वृषार्कात् जलाशये मकरात् क्रमेण न्यसेत् । ततश्चतुर्थेनिदिशि प्रथमं खनेत् । यस्मात्पूर्वविधित्रये राहोर्मुखं मध्यं पुच्छं च क्रमेण वर्तते । यथा—देवालयप्रारम्भे मीनमेषवृषराशिषु रवौ सति ईशानदिशि राहोर्मुखं वायव्यां मध्यं नैर्ऋत्यां पुच्छ अत आग्नेय्यां प्रथमं खनेत् । एवं मिथुनादित्रयं रवौ सति वायव्या राहुमुखं ततः कारणादीशानदिशि प्रथमखातारम्भः कार्यः । एवं कन्यादित्रयेऽर्के नैर्ऋत्यां राहुमुखं धनुर्मकरकुम्भस्थेऽर्के आग्नेय्यां राहुमुखं ततश्चतुर्थदिक् निर्ऋतिस्तत्र खनेत् । एवं मनुष्यगृहे सिंहादित्रयेऽर्के सति ईशानदिशि राहुमुखं वृश्चिकादित्रये वायव्यदिशि कुम्भादित्रये निर्ऋतिदिशि । वृषादित्रये आग्नेय्यां राहुमुखम् । राहुमुखाच्चतुर्थदिशि खातारम्भः । एवं वेद्यारम्भे वृषादित्रयेऽर्के ईशानदिशि सिंहादित्रये वायव्यानिलादि । वेदिरग्निहोत्रादौ परिष्कृता भूमिः । एवं जलाशये मकरादित्रिराश्यस्थितेऽर्के ईशानादितो विलोमं राहुमुखम् ॥

अथ खाताद्यारम्भे विशेषमाह—

> खातं शिलान्यासमधोमुखैर्भैः
> पट्टादिकान्यूर्ध्वमुखैर्विदध्यात् ।
> वातायनद्वारकपाटमार्गा-
> स्तिर्यङ्मुखैर्वास्तुसुखाय धीमान् ॥ ४० ॥

अधोमुखैर्भैर्मूलाश्लेषामिश्रोग्रैर्नक्षत्रैः खातारम्भं सूत्रधारशिलान्यासं च वास्तुसुखसिध्यर्थं धीमान् विदध्यात् । तथोर्ध्वमुखैराद्रापुष्यश्रवणत्रयध्रुवैः पट्टिकादिकं विदध्यात् । तिर्यङ्मुखैर्मृदुहस्तस्वातीपुनर्वसुज्येष्टाश्विनीभिर्गवाक्षादिकं कुर्यात् ॥

> न नैर्ऋत्यां न वायव्यां नाग्नेय्यां न च दक्षिणे ।
> न मध्ये वास्तुनः कार्यं कूपस्य खननं बुधैः ॥ ४१ ॥

वास्तुनो गृहभूमेर्नैर्ऋत्या दिशि वायव्यां वा आग्नेय्यां दक्षिणस्यां वा गृहमध्ये वा कूपस्य खननं बुधैर्न कार्यम् ॥

अथ गृहारम्भे योगविशेषौ तत्फलं चाह—

**तनुसुखरिपुसप्तमत्रिसंस्थे**
**गुरुकविसूर्यबुधार्कजे क्रमेण ।**
**तनुदशभवकण्टकेऽपि शुक्र-**
**ज्ञरविगुरौ शतमायुरालयस्य ॥ ४२ ॥**

लग्ने गुरुश्चतुर्थे शुक्रः षष्ठे रविः सप्तमे बुधः तृतीये शनिः । एवं-क्रमेण ग्रहपञ्चके स्थिते सति गृहस्य वर्षशतमायुः स्यात् । अयमेको योगः । अथ वा लग्ने शुक्रः दशमे बुधः एकादशे रविः केन्द्रे गुरुरेव-विधे योगेऽपि शतमायुर्गृहस्य ॥

अथान्ययोगद्वयं सफलमाह—

**रविकवीज्यकुजे सहजोदया-**
**स्मजरिपौ शरदां द्विशती क्रमात् ।**
**गुरुकुजार्किविधौ तु सुहृद्भवा-**
**यदशमे तदशीतिरुदाहृता ॥ ४३ ॥**

तृतीये रविः लग्ने भृगुः पञ्चमे गुरुः षष्ठे भौमः एवंविधे योगे प्रारब्धस्य गृहस्य वर्षशतद्वयमायुः स्यात् । अयमेको योगः । अथापरः । चतुर्थे गुरुः एकादशे भौमः एकादशे शनिः दशमे शशी एवंविधे योगे आयुर्वर्षाणामशीतिरुदाहृता ॥

अथान्ययोगत्रयमाह—

**शुक्रस्तनौ गुरुर्बन्धौ शनिर्लाभे निजोच्चगः ।**
**एकोऽपि लक्ष्मीं तनुते किं पुनर्द्वौ त्रयोऽपि वा ॥ ४४ ॥**

तनौ लग्ने निजोच्चगः शुक्रः । लग्नभूतमीनस्थः शुक्र इत्यर्थः । अय-मेको योगः । अथवा बन्धौ चतुर्थे निजोच्चगः कर्कस्थो गुरुरयं

द्वितीयो योगः । अथवैकादशे तुलास्थः शनिरयं तृतीयो योगः । फलमाह—एक इति । अत्रैकोऽपि योगो लक्ष्मीं तनुते तत्र योगद्वयं योगत्रयं वा लक्ष्मीं कुर्यादिति किमुत वक्तव्यमित्यर्थः ॥

अथ योगवशाद्गृहस्य परहस्तगामित्वमाह—

द्यूनेऽम्बरे वा सबलोऽपि खेटः
शत्रोर्नवांशे यदि वर्षमध्ये ।
सदा गृहं तत्परहस्तसंस्थं
बलेन हीनो यदि वर्णनाथः ॥ ४५ ॥

सबलोऽपि अत्युत्कृष्टशुभफलदातापि खेटो ग्रहः शत्रोर्नवांशे शत्रुस्वामिकनवांशे स्थितः सन् सप्तमे दशमे वा तिष्ठति चेत्तदा तद्गृहं वर्षमध्ये परहस्ते संस्था स्थितिर्यस्य तथाभूतं स्यात् । यदि वर्णनाथो ब्राह्मणादिवर्णस्वामी शुक्रादिर्बलेन हीनो निर्बलस्तर्ह्येव तथा स्यात् । यदा तु वर्णनाथः सबलस्तदा परहस्तगामित्वं न स्यादित्यर्थः ॥

अथ द्वारचक्रमाह—

अब्ध्यष्टाष्टगुणाब्धिषु भास्करभान्निर्मितं द्वारम् ।
शुभमशुभं शुभमशुभं शुभं क्रमाद्द्वारचक्रमिदम् ॥ ४६ ॥

भास्करभात्सूर्याधिष्ठितनक्षत्रादब्धिषु चतुर्षु दिननक्षत्रेषु रचितं द्वारं शुभम् । ततोऽष्टसु भेष्वशुभम् । ततोऽष्टसु शुभम् । ततस्त्रिष्वशुभम् । ततश्चतुर्षु शुभमितीदं द्वारचक्रम् ॥

अथ निषिद्धयोगान्तरमाह—

मङ्गलाधिगतरेवतीमघाहस्तपुष्यजलमूलभेषु यद् ।
मङ्गलस्य दिवसेऽपि यत्कृतं मङ्गलं भवति तत्र न क्वचित् ॥ ४७ ॥

भौमाधिष्ठितरेवत्यादियुक्तनक्षत्रेषु भौमस्य वारेऽपि यद्गृहं कृतं तत्र मङ्गलं कदाचिन्न भवति । अत्र जलं पूर्वाषाढा भौमयुक्तरेवतीमघादिषु यो भौमवारस्तत्र कृतं गृहं कल्याणकारि न स्यादित्यर्थः ॥

बुधयुक्तेषु हस्ताश्विचित्रार्यमविरिञ्चिषु ।
सुतायुःसुखसम्पत्त्यै यत्कृतं बुधवासरे ॥ ४८ ॥

बुधाधिष्ठितेषु हस्तादिप्रोक्तभेषु यो बुधवासरस्तत्र यद्गृहं कृतं तत्सुतायुःसुखवृद्ध्यै स्यात् ॥

गुरुणाधिष्ठितेष्वीज्यध्रुवेन्द्वम्बुविष्णुषु ।
गुरुवारे यदारब्धं तत्रोत्पन्नः सुतो नृपः ॥ ४९ ॥

गुरुणा युक्तेषु पुष्यध्रुवमृगशीर्षाश्लेषापूर्वाषाढाश्रवणेषु यो गुरुवारस्तत्र यदारब्धं गृहं तत्रोत्पन्नः सुतो नृपसदृशो भवति ॥

शुक्राधिष्ठितवस्वीश तक्षद्वीशाश्विपाशिषु ।
आरब्धं शुक्रवारे यत्तद्गृहं धनधान्ययुक् ॥ ५० ॥

शुक्रयुक्त धनिष्ठाऽऽर्द्राचित्राविशाखाऽश्विनीशततारकासु शुक्रवारे यदारब्धं तद्गृहं धनधान्ययुक्तं स्यात् ॥

शनियुक्तपुरन्दराजपाद्वरुणीबुध्न्यसमीरमित्रभे ।
रचितं शनिवासरेऽपि तत्सदनं भूतपिशाचदूषितम् ॥ ५१ ॥

शनैश्चराधिष्ठिते ज्येष्ठापूर्वाभाद्रपदास्वात्यनुराधानक्षत्रे शनिवासरे च रचितं गृहं भूतपिशाचदूषितं स्यात् । अत्रायं निष्कृष्टोऽर्थः—पूर्वं गृहारम्भनक्षत्राण्यवधेयानि ततो वृषवास्तुचक्रे विचार्याणि पश्चादिदं योगपञ्चकं विचार्य कृतो गृहारम्भोऽतीव शुभफलदो भवेत् ॥

केवलैस्तृणकाष्ठैर्या भवनस्य विनिर्मितिः ।
न तत्र मासदोषः स्यादन्यत्सर्वं तु पूर्ववत् ॥ ५२ ॥

तृणकाष्ठैरेव न तु पाषाणेष्टयादिभिर्या गृहस्य निर्मितिस्तत्र मासदोषो न स्यादितरत्तिथिनक्षत्रादिकं पूर्ववज्ज्ञेयम् । उक्तं च—"पाषाणेष्टयादिगेहानि निन्द्यमासे न कारयेत् । तृणदारुगृहारम्भे मासदोषो न विद्यते ॥" इति ॥

अथ गृहप्रवेशमुहूर्तं विवक्षुस्तावत्प्रवेशस्य त्रैविध्यमाह—

अपूर्वसंज्ञो नवनिर्मिते गृहे
यात्रानिवृत्तौ तु सुपूर्वसंज्ञकः ।
द्वन्द्वाभयोऽग्न्यादिभयोर्ध्वनिर्मिते
गृहप्रवेशो मुनिभिस्त्रिधोदितः ॥ ९३ ॥

अत्र प्रवेशस्त्रिविधः अपूर्वप्रवेशः सुपूर्वप्रवेशो द्वन्द्वाभयप्रवेशश्चेति । तत्र नवं गृहं निर्माय यः प्रथमः प्रवेशः सोऽपूर्वसंज्ञकः । यस्तु नृपतेर्यात्रानिवृत्यनन्तरं गृहप्रवेशः स सुपूर्वसंज्ञकः । अग्न्यादिभयोर्ध्वनिर्मिते अग्निभयवृष्टिभयादेरनन्तरं निर्मिते पुनः सम्पादिते गृहे प्रवेशो द्वन्द्वाभय उच्यते । एवं गृहप्रवेशो मुनिभिर्वसिष्ठादिभिस्त्रिधा कथितः ॥

तत्रादावपूर्वसुपूर्वयोर्मासशुद्ध्यादिकमाह—

अपूर्वं सुपूर्वं च कुर्यात्प्रवेशं
तपःफाल्गुनज्येष्ठवैशाखमासु ।
विना दर्शरिक्तार्कभौमान्स्थिरेऽङ्गे
दशायस्त्रिषष्ठे जनुर्लग्नभाभ्याम् ॥ ९४ ॥

माघफाल्गुनज्येष्ठवैशाखमासेषु अपूर्वं सुपूर्वं च प्रवेशं कुर्यात् । दर्शोऽमावास्या । रिक्ताश्चतुर्थीनवमीचतुर्दश्यः । अर्कवारो भौमवारश्च एतान्विना । एतदतिरिक्ततिथ्यादावित्यर्थः । जनुर्लग्नभाभ्यां जन्मलग्नजन्मराशिभ्यां यद्दशमैकादशतृतीयषष्ठस्थानं तस्मिन्नङ्गे लग्नगते । स्थिरे वृषसिंहवृश्चिककुम्भान्यतमे लग्ने तं प्रवेशं कुर्यात् ॥

यद्दिग्गृहद्वारमिहोडुभिस्तैर्मृदुध्रुवक्षोन्यतमेषु कुर्यात् ।
क्षिप्रैश्चरैः स्यात्परहस्तयातं तीक्ष्णोग्रमिश्रैर्मरणं प्रवेष्टुः॥९५॥

यस्यां दिशि गृहद्वारं इहास्यां दिशि यान्युडूनि तैरुडुभिः । अयमर्थः । यस्मिन्गृहे प्रवेशश्चिकीर्षितस्तस्य गृहस्य द्वारं यस्यां दिशि वर्तते तस्यां दिशि यानि नक्षत्राणि 'सप्त सप्ताग्निभात्' इत्यादिना यात्राप्रक-

रणे कथितानि तेषु मृदुध्रुवनक्षत्रेषु च प्रवेशं कुर्यात्। क्षिप्रैश्चरैः प्रवेशे तद्गृहं परहस्तगतं स्यात्। तीक्ष्णोग्रमिश्रनक्षत्रैः प्रवेशे प्रवेष्टुर्नाशः स्यात्॥

**गृहेशः प्रविशेत्पूर्णानन्दाभद्राजयासु च।**
**गृहाणि प्रागपाक्पश्चादुदग्द्वाराण्यनुक्रमात्॥ ९६॥**

गृहस्वामी प्रागादिद्वाराणि गृहाणि क्रमात्पूर्णादितिथिषु प्रविशेत्। यथा—पूर्णायां प्राग्द्वारं गृहं प्रविशेत्। नन्दायां दक्षिणद्वारमित्यादि॥

लग्नशुद्धिमाह—

**त्रिषडाये खलैः सद्भिः षडष्टव्ययवर्जितैः।**
**शुद्धेम्बुरन्ध्रे च तनौ विजनुर्लग्नभाष्टमे॥ ९७॥**

खलैः पापग्रहैस्त्रिषडेकादशे स्थितैः। तथा सद्भिः शुभग्रहैः षडष्टद्वादशरहितैः अर्थात्केन्द्रत्रिकोणसहजायधनस्थितैरुपलक्षिते तथा शुद्धे सर्वग्रहरहितेऽम्बुरन्ध्रे चतुर्थाष्टमे स्थाने सति तथा विजनुर्लग्नभाष्टमे विगतो जनुर्लग्नभाभ्यामष्टमो राशिर्यत्र स्वजन्मलग्नात्स्वजन्मराशेश्चाष्टमराशिः प्रवेशलग्नगतो माभूदित्यर्थः। तादृशे तनौ लग्ने प्रवेशं कुर्यात्॥

अथ रवेर्वामगतिज्ञानमाह—

**रविर्वामोऽष्टमात्पुत्राद्धनाल्लाभाच्च पञ्चसु।**
**स्थानेष्वन्यतमस्थश्चेत्प्राङ्मुखादि विशेद्गृहम्॥ ९८॥**

यस्मिंल्लग्ने गृहप्रवेशश्चिकीर्षितस्तस्मादष्टमं यत्स्थानं ततः पञ्चसु स्थानेषु मध्ये कुत्रचित्स्थितश्चेद्रविः प्राङ्मुखे गृहे प्रवेष्टुर्वामो भवति। ततस्तत्र प्राङ्मुखं गृहं प्रविशेत्। एवं पुत्रात्पञ्चमस्थानात्पञ्चसु स्थानेषु रविस्तिष्ठति चेद्दक्षिणाभिमुखं गृहं प्रविशेत्। यतस्तत्र प्रवेष्टुः स वामः स्यात्। एवं लग्नतो यद्धनं द्वितीयं ततः पञ्चसु रवौ सति पश्चिमाभिमुखं गृहं प्रविशेत्। लग्नाद्यदेकादशं ततः पञ्चसु रवौ उदङ्मुखं गृहं विशेदित्यर्थः॥

अथ प्रवेशे कलशचक्रमाह—

मृतिगतिधनलाभवैरिशोक-
स्थिरसुखिताः क्रमशोऽर्कभात्प्रवेशे ।
कुयुगयुगयुगाब्धिवेदरामा-
ग्निभिरुडुभिर्घटवास्तुचक्रमेतत् ॥ ५९ ॥

रविभा सूर्याक्रान्तनक्षत्रात् कु युगेत्यादिसङ्ख्याकैरुडुभिर्दिननक्षत्रैः प्रवेशे क्रमान्मृतिगतीत्यादिफलं स्यात् । यथा–सूर्याधिष्ठितनक्षत्रेण प्रवेशे मृतिः। ततश्चतुर्भिर्गमनम् । ततश्चतुर्भिर्धनम् । ततश्चतुर्भिर्लाभः । ततश्चतुर्भिर्वैरम् । ततश्चतुर्भिः शोकः । ततस्त्रिभिः स्थैर्यम् । ततस्त्रिभिः सौख्यम् । एतद्घटाख्यवास्तुचक्रं ज्ञेयम् ॥

अथ द्वन्द्वाभयप्रवेशमाह—

द्वन्द्वाभयान्यकृतजीर्णगृहप्रवेशा-
स्तेष्वेव माततिथिवासरलग्नभेषु ।
सेज्याम्बुपानिलवसूर्जनभःसहस्सु
नावश्यमत्र पुनरस्तविचारणास्ति ॥ ६० ॥

द्वन्द्वाभयगृहप्रवेशोऽन्यकृतगृहप्रवेशो जीर्णगृहप्रवेशश्चेति त्रयोऽपि प्रवेशाः। इज्यः पुष्यः। अम्बुपः शततारा। अनिलः स्वाती। वसुर्धनिष्ठा। ऊर्जः कार्तिकमासः। नभाः श्रावणमासः। सहाः मार्गशीर्षः। एतैः सहितेषु तेषु नूतनप्रवेशप्रकरणोक्तेष्वेव मासतिथिवारलग्ननक्षत्रेषु स्युः। अत्र पुनरवश्यमस्तविचारो नास्ति । तदुक्तम्—" निम्नयाने गृहे जीर्णे प्राशने परिधानके । वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः॥" इति॥ अत्र द्वन्द्वाभयगृहमग्न्यादिना नष्टे सति पुनरपि नूतनीकृतम्। अन्यकृतं परनिर्मितम्। जीर्णं प्रसिद्धम् ॥

अथात्यन्तनिषिद्धमाह—

चैत्रे कुजे चरे लग्ने रिक्तायामुग्रतीक्ष्णभे ।
मृगार्द्रा तनौ नेष्टं भाष्टमे न विशेद्गृहम् ॥ ६१ ॥

उत्तरायणस्य प्राशस्त्येऽपि चैत्रमासे गृहं न विशेत् । एवं कुजे भौमवारे चरे मेषकर्काद्यन्यतमलग्ने रिक्तायां तिथौ ४।९।१४ उग्रतीक्ष्णनक्षत्रे च गृहं न विशेत् । तथा कूटाशुद्धौ स्वनामनक्षत्रस्य गृहनक्षत्रेण सह राशिकूटाशुद्धौ तथा जन्मभाष्टमे लग्ने गृहं न विशेत् ॥

अथ वास्तुशान्तौ नक्षत्रशुद्धिमाह—

**वास्तुपूजनविधिर्विधीयते पूर्वमेव विधिवत्प्रवेशतः ।**
**क्षिप्रमैत्रचरनैर्ऋतध्रुवैः पुत्रपौत्रधनधान्यवृद्धये ॥६२॥**

प्रवेशतो गृहप्रवेशदिनात्पूर्वमेव विधिवद्वसिष्ठोक्तप्रकारेण क्षिप्रादिनक्षत्रैः पुत्रपौत्रादिवृद्ध्यर्थं वास्तुपुरुषस्यार्चनविधिः क्रियते ॥

अथ नूतनप्रवेशादावपि साधारणं वसिष्ठवचनमुदाहरति—

**कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं**
**विप्रान्पूज्यानग्रतः पूर्णकुम्भम् ।**
**रम्यं हर्म्यं तोरणस्रग्वितानै-**
**स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेत्तत् ॥ ६३ ॥**

पूर्वप्रकरणोक्तरीत्या शुक्रं पृष्ठतः कृत्वा 'रविर्वामे' इत्याद्युक्तरीत्याऽर्कं वामतः कृत्वा पूज्यान्विप्रान्पूर्णकलशं च पुरतः कृत्वा स्रग्वी भूत्वा तोरणादिभिर्मनोहरं तद्गृहं स्त्रीभिः सुवासिनीभिर्गीतवाद्यैश्च सह विशेत्तत् ॥

अथात्र ग्रन्थे पूर्वग्रन्थेभ्यो विशेषोऽस्ति तं विभावयितुं प्रार्थयते—

**मुहूर्तचिन्तामणिरत्नमाला ***
**मुहूर्तमार्तण्ड मुहूर्ततत्त्वम् ।**
**इत्यादिशास्त्राणि जयन्ति तेभ्यः**
**सभ्यैर्विशेषोऽत्र विभावनीयः ॥ ६४ ॥**

जयन्ति उत्कर्षेण वर्तन्ते । तेभ्यो मुहूर्तग्रन्थेभ्योऽत्र मुहूर्तमालायां यो विशेषः स तु सभ्यैर्भवद्भिर्विभावनीयो ज्ञातव्यः । शेषं स्पष्टम् ॥

विशेषमेव दर्शयति—

**कविताचातुरी कैश्चिच्छन्दसां चातुरी परैः ।**
**स्वल्पाक्षरैः प्रस्फुटार्थमकृतार्थोऽत्र दर्शितः ॥ ६५ ॥**

कैश्चित्कविभिः कविताचातुरी कवित्वचातुर्यमेव दर्शितम् । परैस्तु छन्दसां नानावृत्तानां चातुरी दर्शिता । मया त्वत्र मुहूर्तमालायां स्वल्पाक्षरैः प्रस्फुटार्थोऽभिधेयो यस्य तादृशः प्रकृतार्थः प्रस्तुतपदार्थो दर्शितः ॥

अथ कविर्ग्रन्थान्ते स्वदेशकुलकथनपुरस्सरमात्मानं कथयति चतुर्भिः—

**अस्ति स्वस्तिमदेकमास्पदमिह श्रीविद्ययोर्नीरधे-**
**स्तीरे दाल्भ्यपुरादपाग्दिशि पुरं श्रीपालसेनाभिधम् ।**
**रामस्थापितचित्तपावनकुलोत्पन्नः सतामग्रणीः**
**शाण्डिल्यान्वयमण्डनं गणितवित्तत्रावसत्केशवः ॥६६॥**

इह पृथिव्यां श्रीविद्ययोः श्रीश्च विद्या च तयोर्लक्ष्मीसरस्वत्योरेकमास्पदं मुख्यं स्थानम् । श्रीमन्तो विद्वांसश्च यत्र बहवः सन्तीत्यर्थः । तादृशं स्वस्तिमत् कल्याणयुक्तम् । यत्र सर्वदा मङ्गलानि सन्तीत्यर्थः । एतादृशं श्रीपालसेननामकं पुरं नीरधेः समुद्रस्य तीरे दाल्भ्यपुराद्दक्षिणस्यां दिशि अस्ति । तत्र पुरे रामेण भार्गवेण स्थापितं यच्चित्तपावनकुलं तत्रोत्पन्नः शाण्डिल्यान्वयमण्डनं शाण्डिल्यगोत्रे मण्डनभूतः सतां साधूनामग्रणीः गणितवित् गणितसिद्धान्तवेत्ता केशवोऽवसत् ॥

**तस्मादाविरभून्नृसिंह इति यः काश्यां कृतावस्थिति-**
**स्तत्तज्जातकसंहितागणितविद्वैदग्ध्यवाचस्पतिः ।**
**शाहाकब्बरसार्वभौमतिलकादिल्लीमतल्लीश्वरा-**
**ज्ज्योतिर्वित्सरसत्तमाप पदवीमासेरिदुर्गग्रहे ॥६७॥**

तस्मात्केशवदैवज्ञान्नृसिंह इत्याविरभूत् । नृसिंहनामा दैवज्ञो जात इत्यर्थः । यो नृसिंहः काश्यां कृताऽवस्थितिर्येन सः । किम्भूतः तत्तज्जातकसंहितागणितविदां तानि तानि प्रसिद्धानि जातकसंहितागणित-